# Orissa

The Soul of India

## Orissa : beyond a poet's pen & an artist's brush

ओरिस्साराज्यं कुतूहलिनेत्रयोः पुरतः आकर्षकम् आनन्दसन्दोहजालं प्रसारयति । पुरीस्थस्य भगवतः जगन्नाथस्य वैभवोपेतः रथोत्सवः, चिलिकासरोवरम् इत्यादयः रसमयानन्दस्य गम्भीरमौनस्य च सेतुः इव सन्ति । ते एव धन्याः, ये च अत्रत्यं नीलसागरस्य सुन्दरतीरस्य अपूर्वं सौन्दर्यम् आस्वादितवन्तः । ओरिस्साराज्यं नाम सौन्दर्यस्य अभिव्यक्तिः, संस्कृतेः आकरः...। अत्र सन्ति ओडिस्सि-च्यूप्रभृतयः नृत्यप्रकाराः, पिप्लिप्रभृतयः करकौशलोद्यमाः च । ओरिस्साराज्यं तर्पयति भवतां दर्शनकुतूहलम् । जीवने अवश्यं द्रष्टव्येषु अन्यतमं भवितुम् अर्हति ओरिस्साराज्यीयं प्रकृतिसौन्दर्यम् ।




**For more information contact:** Director, Tourism, Paryatan Bhawan, Bhubaneswar-751014, Orissa, India
Tel: (0674) 432177, Fax: (0674) 430887, e-mail: ortour@dte.vsnl.net.in, website: www.orissa-tourism.com
Tourist Offices at: **Chennai:** 42/18, Mount Road, (2nd Floor), Gee Gee Complex, Pin-600002. Telefax: (044)8534090
**Calcutta:** Utkal Bhawan 55, Lenin Sarani, Pin-700013, Tel: (033) 2443653
**New Delhi:** Utkalika, B/4 Baba Kharak Singh Marg, Pin - 110001, Telefax: (011) 3364580

Visit
**Konark Festival**
**December, 1-5**

ORISSA
*The soul of India*

प्रश्नोत्तरस्पर्धा भवदर्थम् !

# सुन्दरं भुवनेश्वरम्

**December 1-5, 2001 Konark Festival**

भुवनेश्वराय स्वागतं भवताम् । एतत् भारतस्य देवालयनगरत्वेन ख्यातम् अस्ति । अत्र सन्ति पञ्चशताधिकानि मन्दिराणि, यानि च अपहरन्ति भवतां चेतांसि ।

बिन्दुसागरनामके सरोवरे स्नानस्य अनन्तरम् एव भुवनेश्वरदर्शनयात्रा करणीया इति तु परम्परा । 'बिन्दुसागर'सरोवरविषये काचित् कथा एवं श्रूयते - कदाचित् भगवती पार्वती अरण्यसञ्चारेण पिपासाग्रस्ता जाता । तस्याः पानार्थं शिवः भारतस्य सर्वाभ्यः नदीभ्यः, सर्वेभ्यः सरोवरेभ्यः च जलम् आनीय एतत् सरोवरं निर्मितवान् इति ।

एतस्मिन् नगरे स्थितेषु मन्दिरेषु महामन्दिरं नाम लिङ्गराजमन्दिरम् । एषः शिवालयः एकादशे शतके निर्मितः । ४६ मीटर्-औन्नत्येन युक्तम् एतत् मन्दिरम् उत्कलीयशिल्पशास्त्रस्य उत्कृष्टम् उदाहरणम् ।

मुक्तेश्वरमन्दिरम् अपरा रम्या शिल्पाकृतिः । एतस्मिन् उत्कीर्णानि शिल्पानि तावत् अतिमनोहराणि ।

लिङ्गराजमन्दिरतः दक्षिणपूर्वदिशि किञ्चिद्दूरं गतं चेत् शिशुपालगृहनामकं दुर्गीयनगरं प्राप्यते । एतत् क्रिस्तात् पूर्वं तृतीये शतके निर्मितं स्यात् इति भाव्यते ।

एतस्मात् नगरात् दक्षिणे अष्ट कि.मी. दूरे धौलीनामकं स्थलम् अस्ति । यत्र च चक्रवर्ती अशोकः बौद्धमतम् अङ्गीकृतवान् । अशोकस्य प्रथमं शिलाशासनम् अत्र द्रष्टुं शक्यम् ।

'धौलिगिरि'नामके पर्वते कलिङ्गयुद्धसम्बद्धानि स्मारकाणि रक्षितानि सन्ति । एतस्मात् नगरात् अनतिदूरे एव स्थितयोः उदयगिरि-खण्डगिरि-प्रदेशयोः जैनसंस्कृतिद्योतकैः भित्तिचित्रैः युक्ताः गुहाः सन्ति ।

## प्रश्नोत्तरस्पर्धा भवदर्थम् !

**ऊन१४वर्षीयाः अत्र भागं वोढुम् अर्हाः !!**

१. भुवनेश्वरात् अनतिदूरे स्थितं सुव्यवस्थित-निर्माणार्थं ख्यातं नगरं किम् ?

..........................................

२. अनेकशतकानि यावत् व्यवहारपथे स्थितः कश्चन साम्प्रदायिकनृत्यप्रकारः कासुचित् गुहासु चित्रितः । तासां गुहानां नामानि लिखन्तु ।

..........................................

३. भुवनेश्वरम् अन्ये उभे नगरे च 'देवस्थानबहुलानि उत्कलीयानि त्रीणि महानगराणि' इति ख्यातानि सन्ति । तयोः नगरयोः नाम लिखन्तु ।

..........................................

भवताम् उत्तराणि रिक्ते स्थले लिखित्वा नामसङ्केतादिभिः अधस्तनं विवरणपत्रं प्रपूर्य अधोनिर्दिष्टसङ्केताय प्रेषयन्तु -

**Orissa Tourism Quiz Contest**
**Chandamama India Limited**
**No.82, Defence Officers Colony**
**Ekkatuthangal, Chennai - 600 097**

नाम - ..........................................

वयः - ..........................................

सङ्केतः - ..........................................

..........................................

Pin : .............. Phone ..............



Winners picked by Orissa Tourism in each contest will be eligible for 3-days, 2-night stay at any of the OTDC Panthanivas, upto a maximum of four members of a family. Only original forms will be entertained. The competition is not open to CIL and Orissa Tourism family members. Orissa Tourism, Paryatan Bhaven, Bhubaneswar - 751 014. Ph : (0674) 432177, Fax : (0674) 430887, e-mail : ortour@sancharnet.in. Website : Orissa-tourism.com

एतस्य अङ्कस्य विशेषाः  सम्पुटः - १८  सप्टम्बर् - २००१  सञ्चिका - ६



















## अन्तरङ्गम्



SUBSCRIPTION

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**
***Remittances in favour of Chandmama India Ltd.***
**to**
**Subscription Division**
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**Gift Subscriptions**
**By Air Mail to all countries other than India**
**Twelve issues Rs. 900**
**Within India Rs. 120**
**by book post**
Send your remittances by Demand Draft or Money Order favouring 'Chandamama India Limited'



*संस्थापकौ -*
चक्रपाणिः नागिरेड्डी च

# भूत-भविष्यतोः सेतुः

जपानदेशीया शिक्षणसम्बद्धा पत्रिका काचित् बालान् ज्ञापयति यत् अग्निपेटिकां विना अपि कथम् अग्निः उत्पादयितुं शक्यः इति । तत्रत्याः बालाः पाठ्यपुस्तकात् इतिहासं यावत् जानन्ति ततोऽपि अधिकं जानन्ति वस्तुसङ्ग्रहालयदर्शनात् । तत्रत्याः शिक्षकाः वस्तुसङ्ग्रहालये सङ्गृहीतानाम् ऐतिहासिकवस्तूनां परिसरस्य च अत्यधिकोपयोगं स्वीकुर्वन्ति ।

पाठ्यपुस्तके कति वाक्यानि मुद्रितानि इत्येतत् प्रमुखं न । यदि पाठ्यपुस्तकानि बालेषु आसक्तिं जनयितुं न अर्हन्ति तर्हि तेषां तद्रचयितॄणां च निन्दनतः न किमपि प्रयोजनम् । बालाः ज्ञानं, शिक्षणं च पाठ्यपुस्तकेतरमाध्यमात् अपि प्राप्तुम् अर्हन्ति इत्येतत् न विस्मर्तव्यम् अस्माभिः ।

दौर्भाग्यं नाम वयं न केवलम् अस्माकं संस्कृतिविषये, अपि तु सस्यसम्पत्तिविषये प्राणिसम्पत्तिविषये चापि अनवधानवन्तः । विशाले भारतदेशे अन्येभ्यः परिचायनीयाः अभिमानास्पदविषयाः सन्ति एव बहुधा प्रतिराज्ये । अतः एव वयं विविधराज्यानाम् उत्सव-कलादिवैशिष्ट्यानि जानपदकथाः च परिचाययन्तः स्मः । विभिन्नराज्यस्य वैशिष्ट्यस्य अवगमनात् राष्ट्रियैकता खलु सिद्धा भवेत् ?

यस्मिन् राज्ये वयं प्रवासं कुर्मः तत् राज्यम् अस्माकम् आत्मीयं भवति । अत्र येषां राज्यानाम् उत्सव-नृत्य-जानपदकथादिवैशिष्ट्यं वाचकाः पठन्ति तेषु प्रवासः एव कृतः इव भवति तैः ।

तत्त्वज्ञानी भूतपूर्वराष्ट्रपतिः डा॰ एस्. राधाकृष्णवर्यः, यस्य च जन्मदिनम् आचर्यते सप्टम्बर्मासस्य पञ्चमे दिनाङ्के सः, कदाचित् उक्तवान् आसीत् - ''इतिहासनिर्माणाय कानिचन शतकानि अपेक्षितानि, परम्परानिर्माणाय तु इतोऽप्यधिकानि शतकानि आवश्यकानि भवन्ति'' इति ।

अस्माकं परम्परायाः मूलानि इतिहासे निहितानि सन्ति इति, 'भूत-भविष्यतोः सेतुरूपेण स्थितायाः परम्परायाः विषये औदासीन्यं सर्वथा अनुचितम् इति च भारतीयैः अस्माभिः कदापि न विस्मर्तव्यम् ।

---

*सम्पादकः* - विश्वम्
*सम्पादनमार्गदर्शकौ* - रस्किन् बाण्ड्, मनोजदासः च
*सम्पादनपरामर्शकः* - के. रामकृष्णन्




# श्रेष्ठः कः?

कश्चन कृषिकः नगरं गच्छन् आसीत् । मध्येमार्गं कश्चन वणिक्, कश्चन अध्यापकः च मिलितौ । त्रयः अपि वार्तालापं कुर्वन्तः अग्रे गतवन्तः ।

मध्याह्नः आसन्नः । त्रयाणाम् अपि बुभुक्षा जाता । किन्तु कोऽपि आहारं न आनीतवान् आसीत् । अत्रान्तरे एका वाटिका प्राप्ता । वाटिकायां पनसफलानि बहूनि आसन् । दूरात् एव तस्य गन्धः नासिकां स्पृशति स्म ।

ते त्रयः वाटिकास्वामिनम् उक्तवन्तः - ''वयं सुदूरेभ्यः ग्रामेभ्यः आगच्छन्तः स्मः, नगरं प्रति गच्छन्तः स्मः च । नितरां बुभुक्षिताः अपि स्मः । यदि भवता एकं पनसफलं दीयेत तर्हि वयं विभज्य खादेम'' इति ।

वाटिकास्वामी एतत् अङ्गीकृत्य एकं पनसफलं तेभ्यः दत्तवान् ।

फलस्य त्वचं विदारयितुम् उद्युक्तस्य कृषिकस्य मनसि विचारः उत्पन्नः - 'एतस्य महान् भागः मया प्राप्तव्यः' इति । अतः सः अवदत् - ''वयं विभिन्नवृत्तिमन्तः । अहं कृषिकः । भवन्तौ अध्यापकवणिजौ । यस्य वृत्तिः श्रेष्ठा तेन महाभागः प्राप्तव्यः इति मम चिन्तनम् । एतद्विषये भवतोः आशयः कः ?'' इति ।

'अध्यापनात् वाणिज्यात् च कृषिः एव श्रेष्ठा । यदि कृषिकः कृषिं न कुर्यात् तर्हि जनाः बुभुक्षया मरणं प्राप्नुयुः । धान्योत्पादकेन महान् भागः प्राप्तव्यः इति तु न्याय्यं चिन्तनम् इति एतौ भावयतः' इति कृषिकस्य चिन्तनम् आसीत् ।

कृषिकस्य कथनं श्रुत्वा अध्यापकः अवदत् - ''भवतः कथनस्य श्रवणस्य अनन्तरं मया एका कथा स्मर्यते । पूर्वं कश्चन धनिकः आसीत् । तस्य त्रयः पुत्राः आसन् ।

ते त्रयः अपि परिश्रमम् अकुर्वन्तः इतस्ततः व्यर्थतया अटन्तः कालं यापयन्ति स्म । पुत्राणाम् एतस्मात् व्यवहारात् धनिकः खिन्नः ।

वार्धक्यं प्राप्तवान् धनिकः चिन्तितवान् - 'मम पुत्राः धनस्य अपव्ययं यथा न कुर्युः तथा कोऽपि उपायः चिन्तनीयः' इति । अतः सः एकैकम् अपि पुत्रम् एकान्ते आहूय स्वस्य मरणशासनं दर्शितवान् । तत्र लिखितम् आसीत् - 'सम्पत्तेः चत्वारः भागाः कल्पयिष्यन्ते । यस्य समीपे अङ्गुलीयकं भविष्यति तस्मै चतुर्थः भागः दास्यते' इति । तत् दर्शयित्वा सः एकैकम् अपि अवदत् - "वत्स ! यदि भवान् योग्येन क्रमेण जीवनं कुर्यात् तर्हि अङ्गुलीयकम् अहं भवते एव दास्यामि" इति । अङ्गुलीयक-प्राप्तीच्छया त्रयः अपि सद्व्यवहारम् आरब्धवन्तः ।

केषाञ्चित् दिनानाम् अनन्तरं धनिकः दिवं गतः । ग्रामप्रमुखाः तस्य मरणशासनं पठितवन्तः । सम्पत्तिं चतुर्धा विभज्य ते पृष्टवन्तः - "भवत्सु केन अङ्गुलीयकं प्राप्तम् ?" इति ।

'मया' इति वदन् ज्येष्ठः अङ्गुलीयकं दर्शितवान् । 'मया अपि' इति वदन्तौ मध्यमकनिष्ठौ अपि अङ्गुलीयकं दर्शितवन्तौ । अन्यः यथा न जानीयात् तथा त्रिभ्यः अपि अङ्गुलीयकं दत्तवान् आसीत् धनिकः । मार्गान्तरम् अपश्यन्तः ग्रामप्रमुखाः त्रिभ्यः अपि सम्पत्तिं समानतया विभज्य दत्तवन्तः ।"

एवं कथाम् उक्त्वा अध्यापकः अवदत् - "अस्माकं त्रयाणाम् अपि वृत्तिः श्रेष्ठा एव । तत्र तारतम्यं किमपि नास्ति । त्रयाणाम् अपि समानतया बुभुक्षा अस्ति । वृत्तिविशेषवतः अधिकबुभुक्षा भवति इति तु नास्ति । अतः वयं फलं समानतया विभज्य खादाम" इति ।

एतत् श्रुत्वा कृषिकः लज्जितः जातः । तदनन्तरं ते तत् पनसफलं त्रिधा विभज्य खादित्वा बुभुक्षां निवार्य सन्तोषेण अग्रे गतवन्तः ।



# आधिक्येन दत्तम् औषधम्

काशीं गच्छन्तौ उभौ वैद्यौ कदाचित् मिलितौ । परस्परवार्तालापस्य अनन्तरं वृत्तिजीवनस्य अनुभवम् अपि तौ परस्परम् उक्तवन्तौ । एतदवसरे एकः वैद्यः अवदत् - ''मम ग्रामे कश्चन मानसिकरोगी अस्ति । तस्य चिकित्सा नितरां कष्टकरी जाता अस्ति'' इति ।

द्वितीयः वैद्यः अपृच्छत् - ''का समस्या सा ?'' इति ।

तदा प्रथमः वैद्यः अवदत् - ''अस्माकं देशे कश्चन विचित्रः क्रमः अस्ति । अनपत्यस्य राज्ञः मरणं यदि भवति तर्हि गजस्य शुण्डायां माला स्थाप्यते । गजेन सा माला यस्य कण्ठे अर्प्यते सः एव राजा भविष्यति । अस्मद्देशस्य राजा अनपत्यः आसीत् । राजधानीपरिसरे कश्चन काष्ठविक्रेता वसति । तस्य मनसि भ्रमः कदाचित् उत्पन्नः - 'राजगजः मम कण्ठे मालाम् अर्पयिष्यति, अहं च राजा भविष्यामि' इति । अयं भ्रमः प्रवृद्धः । अतः सः उन्मत्तः जातः । आत्मानं राजानं भावयति स्म सः । तदीयमातापितरौ तं चिकित्सार्थं मत्समीपम् आनीतवन्तौ । योग्येन चिकित्सादिना अहं तस्य भ्रमं निवारितवान् ।...''

''इदानीं सः आत्मानं राजानम् अभावयन् काष्ठविक्रेतारं भावयति ननु ?'' इति अपृच्छत् अपरः वैद्यः ।

''आम् । किं तु अत्रान्तरे राजा मृतः । वरणमाला गजस्य शुण्डायां स्थापिता । सौभाग्यवशात् गजः तस्य कण्ठे एव मालाम् अर्पितवान्'' इति अवदत् प्रथमः वैद्यः ।

''अहो, अपूर्वा घटना ! ततः किं प्रवृत्तम् ?'' इति पृष्टवान् द्वितीयः वैद्यः ।

प्रथमः वैद्यः अवदत् - ''किन्तु आश्चर्यं नाम सः काष्ठविक्रेता गजेन अर्पितां मालां क्षिप्त्वा - 'अहं राजा नास्मि' इति उच्चैः वदन् राजधानीतः धावितवान्, अरण्ये काष्ठसङ्ग्रहणे उद्युक्तः अभवत् च । एतत् दृष्ट्वा जनाः हसन्तः सन्ति'' इति ।

''एषा तु दौर्भाग्यकरी घटना'' इति उक्तवान् द्वितीयः वैद्यः ।

''किन्तु मम प्रश्नः यत् एवं किमर्थं जातम् इति । किं मम चिकित्साक्रमे कोऽपि दोषः आसीत् ?'' इति पृष्टवान् प्रथमः ।

तदा द्वितीयः वैद्यः अवदत् - ''राजत्वप्राप्तिनिवारणार्थं भवता यत् औषधं दत्तम् आसीत् तत्र आधिक्यं जातं स्यात् । अतः एव एतादृशः परिणामः लक्ष्यते'' इति ।





# यक्षपर्वतः

## ७

*(समरबाहुं तदनुयायिनः च भल्लूकचर्मधारिणः बन्दीकृत्य गुहां प्रति गतवन्तः । खड्गवर्मा जीवदत्तः च धूमनिर्गमस्थलं लक्ष्यीकृत्य गत्वा गुहादुर्गस्य स्थानं प्राप्तवन्तौ । ततः तौ गुहां प्रविष्टवन्तौ । भल्लूकचर्मधारिणः सैनिकाः तौ गृहीतवन्तः । सुरङ्गमार्गेण नयन्तः वृकशिलास्थानं प्रति नीतवन्तः च । तदनन्तरम् ....)*

सर्वत्र अन्धकारः प्रसृतः आसीत् । भल्लूकचर्मधारिणौ सैनिकौ खड्गवर्म-जीवदत्तौ सुरङ्गमार्गेण किञ्चिद्दूरं नीतवन्तौ । ततः गमनं स्थगयित्वा कश्चन भल्लूकचर्मधारी अन्यम् उक्तवान् – ''एतौ वराकौ वृकशिलास्थलं विनोदस्थलं भावितवन्तौ इति भाति । इतःपूर्वम् अस्माभिः ये गृहीताः ते सर्वे वृकाणां ध्वनिं श्रुत्वा एव भीत्या कम्पन्ते स्म । एतौ तु तस्य स्थलस्य भीकरतां श्रुत्वा अपि हसतः । अतः किम् एतयोः कृते वृकशिलास्थानं दर्शयाम ?'' इति ।

''युक्तम् एतत् । वृकस्थलदर्शनात् आनन्दः अनुभूयताम् एताभ्याम्'' इति उक्तवान् अन्यः ।

ततः तयोः एकः सैनिकः गुहायाः भित्तेः ऊर्ध्वभागे स्थिताम् एकां शिलां बलात् आकृष्टवान् । तदा पार्श्वे एकं द्वारम् उद्घाटितम् अभवत् । तत्र सर्वत्र प्रकाशः प्रसृतः ।

प्रकाशसाहाय्येन जीवदत्तः सुरङ्गमार्गस्य वैशाल्यादिकं परिशील्य अवदत् – ''खड्गवर्मन् ! एषा गुहा अल्पाकारिका स्यात् इति आवाभ्यां यत् चिन्तितं तत् मिथ्या । एषा तु अतिविस्तृता अस्ति इति भासते । अत्र बहवः जनाः वसेयुः इति बाह्यदर्शनात् सर्वथा न



ज्ञायते'' इति ।

एतत् श्रुत्वा भल्लूकचर्मधारी सैनिकः हसन् अवदत् - ''भवान् सूक्ष्मग्राही अस्ति इति भाति । वृकशिलास्थले सप्ताहं यावत् स्थित्वा सजीवं प्रत्यागतं चेत् भल्लूकगुरोः सेवया शेषजीवनं यापयितुं शक्नुयात्'' इति ।

खड्गवर्मा जीवदत्तः च उद्घाटितात् द्वारात् दृष्टिं प्रसारितवन्तौ । ततः अनतिदूरे समतल-प्रदेशे काचित् महाशिला दृष्टा । तस्याः उपरि उभौ पुरुषौ उपविष्टौ आस्ताम् । तयोः हस्ते एकैकं शूलम् आसीत् । भूमौ स्थित्वा खादनार्थं प्रयतमानान् वृकान् तौ तेन शूलेन तदा तदा निवारयतः स्म । केचन वृकाः शिलां परितः भ्रमन्तः तयोः ग्रहणार्थम् अवकाशं प्रतीक्षमाणाः आसन् ।

''वेषदर्शनात् भासते यत् एतयोः अन्यतरः समरबाहुः एव स्यात् इति'' इति उक्तवान् जीवदत्तः ।

''तयोः अन्यतर समरबाहुः उत भीरुबाहुः उताहो दुर्बलबाहुः इति वयं न जानीमः । किन्तु एतावत् तु जानीमः यत् अचिरात् एव अनुचरसहितं तं वृकाः मारयित्वा खादिष्यन्ति इति । भवन्तौ अपि तत्र नीयेते अस्माभिः । तयोः इदानीं या स्थितिः सा एव स्थितिः भवतोः अपि । यदि वृकेश्वर्याः कृपा स्यात् तर्हि भवन्तौ सजीवं तिष्ठेतां, भल्लूकगुरोः सेवया सार्थक्यं सम्पादयेतां च'' इति उक्तवान् कश्चन सैनिकः ।

तदा जीवदत्तः असन्तोषेण उक्तवान् - ''शुकः इव स्वगुरोः नाम पुनः पुनः मा रटतु भोः । आवाभ्यां तस्याः शिलायाः समीपे गन्तव्यं खलु ? अवश्यं गच्छावः आवाम् । तदर्थं मार्गं दर्शयतु तावत्'' इति ।

''अहो धैर्यं भवतोः ! वृकशिलासमीप-गमने कथं भवतोः एतावान् उत्साहः ?'' इति आश्चर्येण पृष्टवान् अपरः सैनिकः ।

''मार्गस्य दर्शनं भवतः कार्यम् । तत् भवान् करोतु । अन्यविषये चिन्तनं मास्तु भवतः'' इति सूचितवान् खड्गवर्मा ।

''मरणार्थं भवतोः एव एतावान् उत्साहः अस्ति चेत् वयं किं वा कुर्याम ?'' इति वदन् तौ सुरङ्गमार्गेण अग्रे नीतवान् सः । किञ्चिदग्रे यदा गतं तदा चतुष्कोणात्मकम् एकं शिलाफलकं प्राप्तम् । शृङ्खलासाहाय्येन सुदृढं बद्धम् आसीत् तत् । भल्लूकचर्मधारिणः भटाः तस्याः एकं कोणं गृहीत्वा बलात् आकृष्ट-वन्तः । तेन शिलाफलकम् अपासरत् । इदानीं



जीवदत्तः वृकशिलायाः उपरि शूलं गृहीत्वा स्थितं समरबाहुं तदनुचरं च स्पष्टतया द्रष्टुं शक्तः जातः । शिलाफलकस्य अपसरण-शब्दं श्रुत्वा समरबाहुः उच्चस्वरेण उक्तवान् – "अये, चन्द्र ! शिलागर्भतः वृकाः उद्गच्छन्तः सन्ति इति भाति" इति ।

शिलारन्ध्रात् उपरि आगत्य जीवदत्तः तम् अवदत् – "वयं न वृकाः, अपि तु भवान् इव मानवाः एव । समरबाहो, अलं भीत्या । वयं भवतः मित्राणि एव" इति ।

खड्गवर्माणं जीवदत्तं च दृष्ट्वा समरबाहुः नितराम् आश्चर्यचकितः । यावत् सः किमपि वक्तुम् उद्युक्तः तावत् भल्लूकचर्मधारी भटः – "भवन्तः परस्परपरिचययुक्ताः एव ! युक्तम् एव जातम् । वार्तालापं कुर्वन्तः एव वृकाणाम् आहाराः भवन्तु" इति वदन् शिलाफलकम् आकृष्य सुरङ्गमार्गं पिहितवान् ।

जीवदत्तः समरबाहुसमीपं गत्वा तस्य स्कन्धे हस्तं स्थापयन् – "मित्र ! स्वर्णाचार्यतः भवतः वार्ता समग्रा आवाभ्यां ज्ञाता अस्ति । वयं निश्चयेन वृकशिलातः अपायं विना निर्गत्य सुखेन स्वस्थानं प्राप्स्यामः । मम वचने विश्वसितु । अलं चिन्तया" इति अवदत् ।

अत्रान्तरे बुभुक्षितः कश्चन वृकः तस्य समीपम् आगच्छत् । एतत् ज्ञातवान् खड्गवर्मा झटिति खड्गम् आकृष्य बलात् तस्य शिरसि प्रहृतवान् । वृकः गतप्राणः जातः । जीवदत्तः मृतस्य वृकस्य शरीरं शिलायाः उपरि क्षिप्तवान् ।

एतत् साहसं नैपुण्यं च श्लाघमानः जीवदत्तः – "खड्गवर्मन् ! अपूर्वं कौशलं प्रदर्शितं भवता" इति प्रशंसापूर्वकम् उक्त्वा समरबाहुम् उद्दिश्य – "भल्लूकचर्मधारिणः एतेभ्यः वृकेभ्यः कदा आहारं यच्छन्ति इति किं भवता ज्ञायते ?" इति अपृच्छत् ।

"ते सूर्योदयकाले सूर्यास्तकाले च एतेभ्यः मांसं यच्छन्ति । पुरतः यत् द्वारं पिहितं दृश्यते तत् उद्घाट्य आहारं यच्छन्ति ते" इति अवदत् समरबाहुः ।

सूर्यास्तकालः सन्निहितः आसीत् इत्यतः वृकाः सुरङ्गद्वारस्य अधः सम्मिलिताः सन्तः कोलाहलम् आरब्धवन्तः ।

जीवदत्तः खड्गवर्मणे द्वारं प्रदर्शयन् उक्तवान् –" अचिरात् एव भल्लूकचर्मधारिणः वृकेभ्यः मांसं दातुं तत् द्वारम् उद्घाटयिष्यन्ति इति तु सुस्पष्टम् । अतः भवान् धनुषि बाणान् संयोज्य द्वारं लक्ष्यीकृत्य प्रयोगार्थं सन्नद्धः



खादन्तः सन्ति वृकाः ?'' इति अपृच्छत् ।

तावता धावन् आगतः कश्चन भटः कम्पमानस्वरेण अवदत् - ''गुरुवर्य ! महान् अनर्थः सम्पन्नः । वृकशिलायाः उपरि उपविष्टः कश्चन अस्मद्भटान् मारितवान्'' इति ।

''किं तस्य वराकस्य तावत् सामर्थ्यम् ? किं सः न जानाति यत् वृकेश्वर्याः परमभक्तः अहम् अपारशक्तिशाली इति ? एतस्मिन् एव क्षणे शूलेन प्रहृत्य तं यमलोकं प्रेषयिष्यामि'' इति क्रोधेन गर्जन् भल्लूकगुरुः शूलम् उन्नीय ततः प्रस्थितवान् । अल्पे एव काले वृकशिलासमीपं गतः सः तत्रत्यान् उद्दिश्य अवदत् - ''अये अविवेकिनः ! वृकेश्वर्याः भक्तौ मारयन्तः भवन्तः महान्तम् अपराधं कृतवन्तः सन्ति । एतत् मम शूलं भवतः सर्वान् यमलोकं प्रेषयिष्यति'' इति ।

जीवदत्तः स्वस्य मन्त्रदण्डं हस्तेन गृहीत्वा हसन् अवदत् - ''अये भल्लूकगुरो ! भवान् तु भल्लूकसदृशः । किं वृकेश्वर्याः पूजनेन ? एषोऽहं शिलातः अधः आगत्य सुरङ्गमार्गस्य द्वारस्य समीपम् आगच्छन् अस्मि । सावधानः भवतु भवान्'' इति । तदा भीतः समरबाहुः तं निवारयन् अवदत् - ''एवं मा क्रियताम् । वृकाणां मध्यतः निर्गत्य सुरङ्गद्वारसमीपं गमनं नितराम् अपायकरम् । भल्लूकगुरुः मन्त्र-तन्त्रादिषु असमानदक्षः । सः विनायासं भवतः संहारं कुर्यात्'' इति ।

तदा खड्गवर्मा स्वस्य खड्गम् उन्नीय अवदत् -''अये समरबाहो ! मम एतस्मिन् खड्गे, जीवदत्तस्य दण्डे च कीदृशी महाशक्तिः भवतु'' इति ।

जीवदत्तस्य कथनस्य अनुगुणं खड्गवर्मा धनुषि बाणम् आरोप्य द्वारं लक्ष्यीकृत्य गूढान् शिलायाः उपरि सुखेन उपविष्टवान् । द्वित्रक्षणानाम् अनन्तरं तच्च द्वारं उद्घाटितं जातम् । कण्डोलेषु मांसं पूरयित्वा आगतौ भटौ यावत् वृकेभ्यः मांसम् अर्पयितुम् उद्युक्तौ तावता खड्गवर्मणः बाणः तयोः अन्यतरस्य शिरसि लग्नः जातः । सः भूमौ सशब्दम् अपतत् । अपरक्षणे अपरः भटः, तद्धस्तगतः मांसकण्डोलः च सुरङ्गे पतितौ ।

क्षणाभ्यन्तरे तत्र महान् कोलाहलः उत्पन्नः । तत्काले भल्लूकगुरुः वृकेश्वर्याः पुरतः पद्मासने उपविश्य ध्याने निमग्नः आसीत् । कोलाहलस्य श्रवणतः तस्य ध्यानस्थितिः भग्ना । सः क्रोधेन - ''कः कोलाहलः एषः ? ह्यः यौ गृहीतौ तौ किं

निहिता अस्ति इति भवान् न जानाति । कीटसदृशात् भल्लूकगुरुतः भीतिः सर्वथा अनुचिता'' इति ।

सुरङ्गमार्गद्वारे स्थितं भल्लूकगुरुं सकृत् अवलोक्य जीवदत्तः खड्गवर्माणम् अवदत् - ''इतः बहिः गन्तुं प्रायः एकः एव मार्गः अस्ति । पूर्वं वयं यक्षपुरराजं, तत्रत्यान् सिंहान् च येन क्रमेण मारितवन्तः सः एव क्रमः आश्रयणीयः स्यात् वृकाणां भल्लूकगुरोः च मारणार्थम् । भल्लूकगुरोः सुरङ्गे अस्तव्यस्तता कल्पनीया आदौ'' इति ।

''विलम्बः किमर्थम् एतदर्थम् ?'' इति उत्साहपूर्णस्वरेण पृष्टवान् खड्गवर्मा ।

ततः क्षणकालं यावत् अग्रिमपदानां विषये तौ समालोचनं कृतवन्तौ । तदनन्तरं जीवदत्तः खड्गवर्माणम् अवदत् - ''आदौ भवान् तं मृतं वृकं स्कन्धे स्थापयतु । मृतस्य एतस्य वृकस्य मांसस्य खादनार्थं बुभुक्षिताः सर्वे वृकाः भवन्तम् अनुसरिष्यन्ति । तदा भवान् तान् वृकान् स्वखड्गधारारुचिं भोजयतु'' इति ।

''जीवदत्त ! इतोऽपि कियत्कालम् एषः उपदेशः अनुवर्तते ? मृतः एषः वृकः मया इतोऽपि कियत्कालं स्कन्धेन वोढव्यः ?'' इति अपृच्छत् खड्गवर्मा ।

''आवाम् इदानीम् एव शिलातः अवतराव । भवान् अधः गत्वा सर्वत्र धावन् अधिकाधिकवृकाणाम् अवधानम् आकर्षतु । अहं भवतः पृष्ठतः आगमिष्यामि । तदनन्तरम् ...''

जीवदत्तस्य कथनं मध्ये एव निवारयन्



खड्गवर्मा - ''अये भल्लूकगुरो ! आवां भवत्समीपम् आगच्छन्तौ स्वः । यदि वृकेश्वर्याः रक्षकत्वे भवतः इतोऽपि विश्वासः अस्ति तर्हि प्राणरक्षणार्थम् इतः धावित्वा तस्याः पादौ गृह्णातु'' इति उच्चैः वदन् शिलातः अधः कूर्दनं कृतवान् । जीवदत्तः तम् अनुसृतवान् ।

स्वसमीपम् आगच्छन्तौ उभौ पुरुषौ दृष्ट्वा बुभुक्षिताः वृकाः तयोः समीपम् आगताः । खड्गवर्मा शिलां परितः वेगेन धावितवान् । तदा सर्वे वृकाः तम् अनुसरन्तः शिलां परितः धावनम् आरब्धवन्तः । जीवदत्तः तान् अनुसरन् स्वस्य मन्त्रदण्डेन तान् पातयन् वेगेन गच्छति स्म ।

भल्लूकगुरुः सुरङ्गद्वारे स्थित्वा एतत्सर्वं पश्यन् आसीत् । ततः सः उत्साहेन अवदत् - ''सर्वोऽप्येषः वृकेश्वर्याः महिमा । शत्रूणां




मतौ विकारः उत्पादितः अस्ति तयैव । सा एतयोः मतौ विकारम् उत्पाद्य वृकाणां समीपं प्रेषितवती अस्ति । जय वृकेश्वरि ! जय जगदीश्वरि !!'' इति भक्त्या वदन् भल्लूकगुरुः नेत्रे निमील्य करौ योजयित्वा देवीं नमस्कृतवान् ।

'एषः एव सुयोग्यः अवसरः' इति भावयन् जीवदत्तः खड्गवर्माणम् अवदत् - ''मित्र ! सुवर्णावसरः अयम् । एषः भक्तिरसं पीत्वा मदं प्राप्तवान् अस्ति'' इति ।

एतस्य तात्पर्यम् अवगच्छन् खड्गवर्मा स्वस्य स्कन्धे विद्यमानं वृकं तत्र क्षिप्तवान्, यत्र च भल्लूकगुरुः भक्त्या नेत्रे निमील्य स्थितः आसीत् । लक्ष्यभूतम् आहारं भूमौ पतितं दृष्ट्वा पञ्चषाः वृकाः सुरङ्गद्वारसमीपं धावितवन्तः ।

कश्चन बुभुक्षितः वृकः नेत्रे निमील्य स्थितस्य भल्लूकगुरोः उपरि आक्रमणम् अकरोत् । अन्ये वृकाः तम् अनुसृतवन्तः ।

''मां रक्षतु वृकेश्वरि ! रक्ष माम्'' इति उच्चैः वदन् भल्लूकगुरुः अधः अपतत् । एतत् दृष्ट्वा भीताः तदनुचराः - ''अहो वृकाः, वृकाः !!'' इति वदन्तः ततः पलायितवन्तः । कथञ्चित् आत्मनि धैर्यं प्रपूर्य उत्थितः भल्लूकगुरुः परितः दृष्टिं प्रसारितवान् । केचन वृकाः मृतवृकस्य मांसस्य खादने मग्नाः आसन् । एकः बुभुक्षितः वृकः मृतवृकस्य मांसस्य अप्राप्त्या असन्तुष्टः सन् 'गुर्' इति शब्दं कुर्वन् भल्लूकगुरुम् एव पश्यन् स्थितः आसीत् ।

उपस्थितम् अपायम् अवगतवान् भल्लूकगुरुः झटिति शूलम् उन्नीय तं वृकं लक्ष्यीकृत्य गृहीत्वा - ''अये वृकेश्वरीसेवक ! किं वृकेश्वर्याः प्रियभक्तं माम् एव खादितुम् उद्युक्तः

भवान् !'' इति वदन् पदानि पृष्ठतः स्थापयन् झटिति मुखं परिवृत्य ततः धावनम् आरब्धवान् । एतत्सर्वं दूरतः एव दृष्ट्वा खड्गवर्मा जीवदत्तः च अवगतवन्तौ यत् अग्रे किं भविष्यति इति ।

''खड्गवर्मन् ! इतः पलायितः भल्लूकगुरुः जीवितः उत मृतः इति न ज्ञातम् आवाभ्याम् । सुरङ्गं प्रविष्टवन्तः वृकाः तत्रत्येषु भीतिम् अपायं च जनितवन्तः सन्ति इति तु तेषां कोलाहलतः एव ज्ञायते । भवता अपि श्रूयते खलु सः कोलाहलः ?'' इति अपृच्छत् जीवदत्तः ।

''कुतो न ? स्पष्टतया श्रूयते एव । एतावता भीरवः केचन सुरङ्गगृहं परित्यज्य पलायितवन्तः स्युः अपि । भल्लूकगुरुः सजीवं यथा न तिष्ठेत् तथा करणीयम् आवाभ्याम्'' इति उक्तवान् खड्गवर्मा ।

''तर्हि वयम् इतः निर्गत्य गुहागृहं प्रविशाम । समरबाहुं तदनुचरं च अत्रैव आह्वयतु तावत्'' इति सूचितवान् जीवदत्तः ।

खड्गवर्मणः आह्वानं श्रुत्वा समरबाहुः तदनुचरः च वृकशिलातः अवतीर्य तयोः समीपम् आगतवन्तौ । जीवदत्तः समरबाहुम् अवदत् - ''वयं द्वारम् अतिक्रम्य गत्वा गुहागृहं प्रविशन्तः स्मः'' इति ।

समरबाहुः भीतिमिश्रितदृष्टिं परितः प्रसारयन् - ''किं वयं चत्वारः सर्वान् शत्रून् संहर्तुं शक्नुयाम ? न खलु ? अतः गुहागृहप्रवेशविचारं परित्यज्य कथञ्चित् इतः निर्गत्य अरण्यं प्रविशाम तावत् । अतः इतः निर्गत्य अरण्यं कथं प्राप्तव्यम् इत्यत्र उपायस्य चिन्तनं वरम्'' इति अवदत् ।

''किमर्थं भीतिः समरबाहो ! इतः निर्गमनार्थम् एकः एव मार्गः । तेन द्वारेण गुहागृहं प्रविश्य एव अग्रे गतं चेत् अरण्यं प्रति गमनं शक्यम् । अन्यः मार्गः नास्ति सर्वथा । अलं भीत्या'' इति वदन् जीवदत्तः द्वारशिलाम् आरुह्य गुहागृहं प्रविष्टवान् । तम् अनुसरन् खड्गवर्मा अपि उपरि गतवान् ।

समरबाहुः तदनुचरः च यावत् किं करणीयम् इति चिन्तयन्तौ आस्तां तावता कश्चन भीकरः वृकः जिह्वां प्रसार्य 'गुर्...' इति शब्दम् उत्पादयन् तयोः समीपम् आगतवान् । *-(अनुवर्तते)*





# परिवर्तनम्

प्राचीनकाले कलिङ्गनगरे महाजननामकः कश्चन वणिक् निवसति स्म । सः वाणिज्ये न्यायनिर्णये चापि समर्थः । महाजनस्य पुत्रः शम्भुः । पितुः तस्य च स्वभावे महान् भेदः आसीत् । धनिकपुत्रेषु दृश्यमानाः मद्यपान-द्यूतादयः दुरभ्यासाः तस्मिन् पर्याप्तमात्रेण आसन् । पुत्रस्य दुरभ्यासाः निवारणीयाः इति उद्देशेन महाजनः पुत्रं बहुधा विवेकं बोधितवान् । किन्तु सर्वं व्यर्थं जातम् । महाजनः पुत्रस्य विषये चिन्तां बहुधा अनुभवति स्म । एकमात्रपुत्रस्य कठोरं दण्डनं कर्तुं न इच्छति स्म सः ।

पितुः विषये शम्भोः मनसि श्रद्धाभावः प्रेमभावः च आसीत् । किन्तु पितुः हित-वचनानाम् उपेक्षां करोति स्म सः । अतः सः दुरभ्यासानां दासः जातः आसीत् । बहुधा चिन्तनं कृत्वा महाजनः निर्णीतवान् – 'किञ्चित्-कालं यावत् पुत्रात् दूरे तिष्ठामि चेत् वरम् । आश्रयदाता न भवति चेत् शम्भौ परिवर्तनं भवेत्' इति ।

एकदा महाजनः शम्भुम् उक्तवान् – ''पुत्र ! अहं समुद्रवाणिज्यं कर्तुं दूरदेशं गच्छन् अस्मि । अतः मम समीपे विद्यमानं सर्वं धनं मया सह नयामि । मम प्रत्यागमनार्थं कियान् कालः अपेक्षितः इति न ज्ञायते'' इति ।

पितुः वचनैः शम्भुः व्याकुलः अभवत् । पितरम् अपृच्छत् – 'धनं विना अहं कथं जीवनं करोमि ?' इति । महाजनः पुत्रं समाश्वासयन् – ''सत्यं पुत्र ! अहं तु तदर्थमेव गच्छन् अस्मि । धनार्जनार्थं मूलधनम् आवश्यकं खलु । तथापि भवान् चिन्तां न करोतु । यदि अपेक्षितं तर्हि मम मित्रेभ्यः ऋणं स्वीकरोतु । आगमनानन्तरम् अहं प्रत्यर्पयिष्यामि'' इति ।

'पितुः गमनेन अहं स्वतन्त्रः भविष्यामि' इति चिन्तितवान् शम्भुः । पितुः निर्गमनस्य अनन्तरं सः इतोऽप्यधिकतया दुरभ्यासे मग्नः अभवत् । तदर्थं यावत् धनम् आवश्यकम् आसीत् तावत् ऋणरूपेण स्वीकरोति स्म सः । यस्मात् शक्यं तस्मात् सर्वस्मात् अपि ऋणं स्वीकृतवान् सः ।

किन्तु किञ्चित्कालानन्तरं वणिजः शम्भवे ऋणदानं निराकृतवन्तः । तथापि शम्भुः विचलितः न अभवत् । गृहे विद्यमानानि वस्तूनि,

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा

आभूषणानि च विक्रीय प्राप्तं धनं समग्रं व्ययीकृतवान् सः ।

तदा एव कदाचित् उभौ नाविकौ शम्भोः समीपम् आगत्य अश्रूणि स्रावयन्तौ अवदताम् - ''महोदय ! केभ्यश्चित् दिनेभ्यः पूर्वं भवतः पितुः नौका समुद्रे मज्जिता अभवत् । सर्वा सामग्री विनष्टा । आवां कथञ्चित् प्राणरक्षणं कृत्वा आगतौ'' इति ।

एतां वार्तां श्रुत्वा शम्भुः दिङ्मूढः अभवत् । अग्रे कथम् इति ज्ञातुम् अशक्तः अभवत् सः ।

महाजनस्य मरणवार्तां श्रुत्वा जनाः शम्भु-द्वारा तस्य पित्रा कृतस्य ऋणस्य प्रति-स्वीकरणम् आरब्धवन्तः । ऋणस्य प्रतिदानार्थं गृहं विहाय शम्भुना सर्वमपि विक्रेतव्यम् अभवत् । तथापि ऋणदातारः आगत्य पङ्क्तिशः तिष्ठन्ति स्म ।

एतस्मात् शम्भुः भीतः । स्वेन प्राप्तव्यस्य ऋणस्य विषये व्यवहारपुस्तके अन्वेषणम् आरब्धवान् सः । प्रतिस्वीकारयोग्यम् ऋणं बहु आसीत् । शम्भोः मनसि पुनः आशा उत्पन्ना । ऋणं प्रतिप्राप्तुं सः स्वस्य कर्मचारिणः प्रेषितवान् । किन्तु एकस्मात् अपि धनं न प्राप्तम् । ऋणं स्वीकृतवन्तः उक्तवन्तः - ''अस्माभिः ऋणं प्रत्यर्पितम् अस्ति । अस्माकं समीपे प्राप्तिपत्रम् अस्ति'' इति ।

पित्रा दत्तम् ऋणं शम्भुः यदा प्रतिप्राप्तुं न शक्तः तदा तस्य मनसि सन्देहः उत्पन्नः - 'किमर्थं पित्रा महत् ऋणं स्वीकृतं स्यात् ? तानि पत्रकाणि कृतकानि स्युः' इति । अतः सः तज्ज्ञानां द्वारा तेषां पत्रकाणां परीक्षणं कारितवान् । ते परीक्ष्य उक्तवन्तः यत् एतानि हस्ताङ्कनानि महाजनस्य एव इति ।




पित्रा कृतम् ऋणं प्रत्यर्पयितुं शम्भुः न शक्तवान् । अन्ते ऋणदातारः पत्रकं स्वीकृत्य आगमनं परित्यक्तवन्तः । किन्तु तावता सुहृदः अपि तस्मात् दूरं गतवन्तः आसन् ।

एवं नगरस्थाः सर्वेऽपि शम्भुना सह वार्तालापं त्यक्तवन्तः । शम्भुः भावितवान् यत् सर्वे मां बहिष्कृतवन्तः इति । सः बहु दुःखम् अनुभूतवान् । मानसिकदृष्ट्या तस्मिन् बहु परिवर्तनम् आगतम् । सः भूतकालीनं जीवनं दुस्स्वप्नं भावयन् सरलजीवनस्य अभ्यासं कृतवान् । वास्तविकरूपेण जीवनं नाम किम् इति तेन स्पष्टरूपेण अवगतम् आसीत् ।

तेषु एव दिनेषु शम्भोः जन्मदिनं सन्निहितम् । जन्मदिनाचरणं शम्भुः चिन्तयन् न आसीत् । किन्तु तस्य इच्छानिच्छादिकम् अपृष्ट्वा तदीयजन्मदिनाचरणस्य निमित्तं

सज्जताः आरब्धाः । केचन आगत्य तस्य गृहं समीचीनतया अलङ्कृतवन्तः । निमन्त्रणं विना एव बान्धवाः उपस्थिताः ।

गृहे आनन्दमयं वातावरणं दृष्ट्वा शम्भुः आश्चर्यचकितः अभवत् । नगरस्य सर्वेऽपि वणिजः शम्भोः गृहम् आगत्य उपविष्टवन्तः ।

शम्भुः आश्चर्येण सह आनन्दमपि अनुभवन् आसीत् । एतस्य कारणं किम् इति तेन न अवगतम् । किन्तु तान् सर्वान् दृष्ट्वा तेन पिता स्मृतः । दुःखं सोढुम् अशक्तः सः रोदनम् आरब्धवान् ।

तदा एव कुतश्चित् तत्र प्रविष्टः महाजनः पुत्रम् आलिङ्गितवान् । शम्भुः पितरम् अत्याश्चर्येण दृष्टवान् । तदा महाजनः – "पुत्र ! इदानीमपि जीवामि अहम् । अहं प्रतिक्षणं भवन्तम् अवलोकमानः आसम् । भवति परिवर्तनम् आनेतुं मया एतत् नाटकं करणीयम् अभवत्" इति अवदत् ।

शम्भुः पितुः चरणयोः मस्तकं स्थापयन् – "पितः ! अहम् अद्यपर्यन्तं भवते दुःखम् एव दत्तवान् । तत् अहम् इदानीम् अवगतवान् अस्मि । इतःपरं कदापि तथा न व्यवहरिष्यामि अहम् । क्षाम्यतु माम्" इति प्रार्थितवान् ।

महाजनस्य नेत्राभ्याम् आनन्दाश्रूणि निस्सृतानि । तत् दृष्ट्वा शम्भुः नतमस्तकः भूत्वा – "मयि तु परिवर्तनम् आगतम् । किन्तु इदानीं वयं निर्धनाः । अस्माकं सर्वा सम्पत् ऋणप्रत्यर्पणे एव गता । भवता हस्ताङ्कितानि पत्रकाणि ते दर्शितवन्तः । भवान् अपि कदाचित् तानि परिशीलयतु" इति अवदत् ।

तदा महाजनः मन्दहासपूर्वकं –"तानि पत्रकाणि प्राप्तिपत्राणि च मया एव सज्जीकृतानि । तानि सर्वाणि कृतकानि । भवतः समीपे धनं न भवेत् इति कारणतः मया तथा कृतम् आसीत् । अस्मदीयं सर्वं धनं मम समीपे सुरक्षिततया अस्ति" इति अवदत् ।

एतत् ज्ञात्वा शम्भुः सन्तुष्टः अभवत् । 'धननाशात् पिता मां रक्षितवान् अस्ति' इति चिन्तयन् सः पितुः विषये कृतज्ञताभावं प्राप्तवान् ।

तदारभ्य पितुः मार्गदर्शनानुसारम् एव व्यवहरन् सः स्वस्य जीवने यशस्वी अभवत् ।



# वेताल-कथा

## सङ्गीतपुष्पम्

दृढवती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये, राजन् ! सामान्यतया राजानः विलासमये जीवने आसक्ताः भवन्ति । स्वस्य भोगेच्छायाः पूरणार्थं ते विविधान् मार्गान् आश्रयन्ति । भवान् राजा सन् अपि सुखादिकं परित्यज्य परिश्रमे उद्युक्तः अस्ति । यदि एतादृशेषु व्यर्थकार्येषु भवतः प्रवृत्तिः दीर्घकालं यावत् भवेत् तर्हि भवान् निश्चयेन राजोचितवैभवात् वञ्चितः भवेत् । किम् एतेन अनुचितकृत्येन ? अद्य एव भवान् राजधानीं प्रतिगत्य भोगसुखम् आतृप्ति अनु-



भवतु । एतं विषयम् अहं बहुवारम् उक्तवान् । तथापि भवान् मम वचने श्रद्धावान् न जातः । भवतः विवेकस्य उद्बोधनार्थं गन्धर्व-नामकस्य गायकस्य कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं चन्दनपुरनामके ग्रामे कुबेरः सुचेलः चेति उभौ धनिकौ निवसतः स्म । तौ उभौ अपि सज्जनौ । उभयोः अपि अपारा कृषिभूमिः सम्पत्तिः च आसीत् । किन्तु तयोः स्वभावे समानता न आसीत् । कुबेरः धनार्जने आसक्तः । सुचेलस्तु कलापोषणादिषु अभिरुचिमान् । ग्रामं प्रति कोऽपि कलाकारः यदि आगच्छति तर्हि तं स्वगृहम् आनीय अमूल्यानि उपायनानि ददाति स्म सः । कुबेरः तु एतादृशेषु कार्येषु स्वयं न प्रवर्तते स्म, किन्तु कोऽपि यदि प्रार्थयते तर्हि उदारतया एव दानं करोति स्म ।

कदाचित् गन्धर्वः नाम कश्चन गायकः एतस्मात् ग्रामात् आकृष्टः जातः । तेन श्रुतम् आसीत् यत् तदीयाः पूर्वजाः पूर्वं चन्दनपुरग्रामे एव वसन्ति स्म इति ।

गन्धर्वस्य वास्तविकं नाम किम् इति कोऽपि न जानाति । कश्चन राजा तस्य गानं श्रुत्वा 'गन्धर्वः' इति तं निर्दिष्टवान् । ततः आरभ्य तेनैव नाम्ना सः ख्यातः जातः । बहुषु नगरेषु तस्य सङ्गीतकार्यक्रमाः प्रवृत्ताः । ततः अपारं धनम् अपि सम्पादितवान् सः । पूर्वजाः यत्र वसन्ति स्म सः ग्रामः गन्तव्यः इति इच्छा तस्य मनसि तीव्रा आसीत् ।

धनिकत्वप्राप्तेः अनन्तरं वैभवोपेतं जीवनं करोति स्म सः । अन्येन अस्नाते सरोवरे एव सः स्नाति स्म । अतः सः यत्र गच्छति तत्र नूतनं सरोवरं निर्मातव्यं भवति स्म । सरोवरजलं परमसुगन्धि भवेत् इति तस्य नियमः आसीत् । विविधप्रदेशेभ्यः आगताः चत्वारः पाचकाः प्रतिदिनं तस्य निमित्तं विविधान् पाकान् भक्ष्याणि च सज्जीकुर्वन्ति स्म । मनसः विनोदार्थं सः प्रसिद्धनर्तकीनां नृत्यं सदा पश्यति स्म । औष्ण्यं सः न सहते स्म । अतः कश्चन शिल्पी वातावरणं शीतलं कर्तुं समर्थं यन्त्रविशेषं तस्य निमित्तं सज्जीकृतवान् आसीत् । तच्च यन्त्रं शीतलं वायुं सुगन्धं च प्रसारयति स्म ।

गन्धर्वः तादृशान् एव स्वस्य सङ्गीतं श्रावयति स्म, ये च एतादृशीः सर्वाः व्यवस्थाः कर्तुं शक्नुयुः । ये तं निमन्त्रयन्ति स्म ते

ससन्तोषम् एव एतत्सर्वं व्यवस्थापयन्ति स्म । यदा चन्दनपुरं प्रति गमनस्य विचारः आगतः तदा गन्धर्वः चिन्तितवान् - 'मन्निमित्तम् अपेक्षितां व्यवस्थां कर्तुं तत्र कः समर्थः स्यात् ?' इति । एतत् ज्ञातुं सः स्वस्य अनुचरं पुलिन्दं चन्दनपुरं प्रति प्रेषितवान् ।

चन्दनपुरम् आगतः पुलिन्दः कुबेर-सुचेलयोः विषये विस्तरेण विषयसङ्ग्रहं कृतवान् । ततः सः कुबेरसमीपं गतवान् । कुबेरः विषयं ज्ञात्वा उक्तवान् - ''गन्धर्वस्य निमित्तं या व्यवस्था कल्पनीया भवेत् ताम् अवश्यं लीलया कर्तुं शक्नुयाम् एव । किन्तु न मे कलासु आसक्तिः, न वा गीतेषु । अतः अहम् आश्रयं दत्त्वा अपि तेन सह समयं यापयितुं न शक्नोमि । तस्य कार्यक्रमेषु भागं न वहामि अपि । आश्रयदानस्य अनन्तरं कलाकाराय समयस्य अदानं गौरवास्पदं न स्यात् । अतः भवान् सुचेलसमीपं गच्छति चेदेव वरं स्यात्'' इति ।

पुलिन्दः सुचेलसमीपं अपि गतवान्, सर्वं विषयं तम् उक्तवान् च । गन्धर्वस्य आगमन-प्रस्तावं श्रुत्वा सुचेलः महता सन्तोषेण - ''गन्धर्वस्य आगमनं महते सौभाग्याय । तस्य निमित्तं सरोवरं कारयिष्यामि । उत्कृष्टान् पाचकान् व्यवस्थापयिष्यामि । नृत्यविशारदाः नर्तकीः आनाययिष्यामि । यावत् सः अत्र स्थास्यति तावत् अहं तेनैव सह स्थास्यामि । सः अत्र आगच्छतु नाम निरातङ्कम्'' इति ।

एतस्मात् नितरां सन्तुष्टः पुलिन्दः प्रतिगत्य गन्धर्वं प्रवृत्तं सर्वं निवेदितवान् । सन्तुष्टान्तरङ्गः गन्धर्वः सुचेलाय वार्तां प्रेषितवान् यत्



मासाभ्यन्तरे चन्दनपुरं प्रति आगमिष्यामि इति ।

चन्दनपुरं प्रति गमनाय गन्धर्वः यावत् सन्नाहम् आरब्धवान् तावता राजा तं निमन्त्रितवान् । ''राजमाता अस्वस्था अस्ति । दिनद्वयं यावत् मूर्च्छावस्थायां स्थिता सा सचेतनता यदा प्राप्ता तदा अपेक्षां प्रकटितवती यत् गन्धर्वस्य गानं श्रोतव्यम् इति । अतः भवता अविलम्बेन आगन्तव्यम्'' इति राज्ञः सन्देशः आसीत् ।

अनन्यगतिकः गन्धर्वः चन्दनपुरं प्रति गमनस्य विचारं परित्यज्य राजभवनं गत्वा राजमातरं सङ्गीतं श्रावितवान् । तत् श्रुतवती राजमाता उक्तवती - ''एतादृशी मनःशान्तिः इतःपूर्वं मया कदापि न प्राप्ता । अतः भवान् मासं यावत् एवम् एव सङ्गीतं श्रावयतु'' इति ।



राजमातुः अपेक्षां तिरस्कर्तुम् अशक्नुवन् गन्धर्वः चन्दनपुरं प्रति वार्तां प्रेषितवान् यत् मासानन्तरम् आगमिष्यामि इति ।

ततः सप्ताहानन्तरं राजवैद्यः गन्धर्वम् उक्तवान् - ''भवतः सङ्गीतम् अपूर्वम् । राजमाता येन रोगेण आ बहोः कालतः पीड्यमाना अस्ति तं रोगं निवारयितुं वयं न शक्ताः अद्यावधि । अहं एकं बीजं दास्यामि भवते । तत् स्वीकृत्य भवता अरण्यं प्रति गन्तव्यम् । भवता सह उभौ सैनिकौ आगमिष्यतः । तौ भवतः आवश्यकताः पूरयिष्यतः । गीतं गायन् भवान् तत् बीजं भूमौ स्थापयेत् । प्रतिदिनं गीतं गायता एव जलसेचनं करणीयम् । ततः सस्यम् उत्पत्स्यते । षण्मासाभ्यन्तरे सस्यं पुष्पिष्यति । प्रथमं पुष्पम् आनीय भवता मह्यं दातव्यम् । तस्मात् सज्जीकृतम् औषधं राजमातुः व्याधिं दूरीकरिष्यति । एतदवसरे भवता स्मर्तव्यं यत् यावत् भवान् अरण्ये स्थास्यति तावत् कन्द-मूल-फल-दुग्ध-जलेभ्यः ऋते अन्यत् किमपि न सेवेत । आहारे व्यवहारे वा काऽपि कृत्रिमता न स्यात् । अतः एव भवान् अरण्यं प्रति प्रेष्यते मया'' इति ।

राजवैद्यमुखात् निस्सृतम् एतत् वचनं राजसम्मतं राजाज्ञातुल्यं च इति गन्धर्वः जानाति स्म । 'राजमातुः प्राणरक्षणाय यदि मम सङ्गीतम् उपकारकं स्यात् तर्हि तदपि वरम् एव' इति चिन्तयित्वा गन्धर्वः पुलिन्दम् आहूय सूचितवान् यत् एषा वार्ता सुचेलाय प्रापणीया इति ।

पुलिन्दः चन्दनपुरं गत्वा सुचेलम् एतां वार्तां श्रावितवान् । सुचेलस्तु सर्वाः व्यवस्थाः कृत्वा गन्धर्वस्य आगमनस्य प्रतीक्षां कुर्वन् आसीत् । 'गृहे मासद्वयात् अधिककालं सरोवरं न रक्षणीयम्' इति वास्तुशास्त्रज्ञाः उक्तवन्तः आसन् । अतः सुचेलः सरोवरं मृत्तिकया पूरितवान् । पाचकेभ्यः नर्तकीभ्यः च द्विगुणितं धनं दत्त्वा प्रतिप्रेषितवान् सः ।

ततः सुचेलः पुलिन्दम् अवदत् - ''मया सज्जीकृता व्यवस्था व्यर्था जाता इति चिन्ता करणीया नास्ति । पुनः गन्धर्ववर्यः यदा आगन्तुम् इच्छति ततः सप्ताहात् पूर्वं मह्यं वार्तां प्रेषयतु । अहं पुनरपि सर्वाः व्यवस्थाः उपकल्पयिष्यामि'' इति ।

पुलिन्दः प्रत्यागत्य सुचेलस्य कथनं यथावत् गन्धर्वं श्रावितवान् । सुचेलस्य व्यवहारात् वचनात् च सन्तुष्टः गन्धर्वः

चिन्तितवान् यत् सुचेलस्य आतिथ्यं प्राप्तुं वा मया चन्दनपुरं प्रति गन्तव्यम् एव इति ।

निश्चिते दिने अरण्यं गतः गन्धर्वः षट् मासान् यावत् अरण्ये स्थितवान् । कानिचित् दिनानि तेन कष्टम् अनुभूतम् । किन्तु अल्पे एव काले तस्य शरीरं वातावरणानुगुणं सज्जं जातम् । अतः तेन उत्तमं स्वास्थ्यम् एव प्राप्तम् । प्रतिदिनं रागाभ्यासः कृतः इत्यतः तदीयः कण्ठस्वरः सुमधुरः जातः ।

गन्धर्वः सङ्गीतबलात् विकसितं पुष्पं प्राप्य राजधानीं प्रत्यागतवान् । तस्य पुष्पस्य उपयोगेन सज्जीकृतस्य औषधस्य सेवनतः राजमाता पूर्णतः स्वस्था जाता । राजमातुः स्वास्थ्यलाभं दृष्ट्वा सर्वे आश्चर्यचकिताः ।

प्रतिवेशिराजः सङ्गीतपुष्पचिकित्सावार्तां श्रुतवान् । गन्धर्वस्य सङ्गीतं श्रोतुम् इच्छन् सः राज्ञे वार्तां प्रेषितवान् यत् गन्धर्वः मम आस्थानं प्रति सकृत् प्रेषणीयः इति । राजा गन्धर्वम् आज्ञापितवान् – 'प्रतिवेशिराज्यं गत्वा आगच्छतु' इति । राजाज्ञां शिरसा वहन् गन्धर्वः प्रतिवेशिदेशं गतवान् । निर्गमनात् पूर्वं सः पुलिन्दम् उक्तवान् – ''चन्दनपुरं प्रति गमनविषये सुचेलाय कस्याश्चित् अपि वार्तायाः प्रेषणं मास्तु'' इति ।

गन्धर्वस्य गानं श्रुत्वा प्रतिवेशिराजः नितरां सन्तुष्टः । गीतश्रवणात् या शान्तिः प्राप्ता तादृशी इतः पूर्वं कदापि न प्राप्ता आसीत् तेन । अतः शाश्वतरूपेण गन्धर्वं स्वसमीपे स्थापयितुम् इष्टवान् सः । किन्तु एतं प्रस्तावं गन्धर्वस्य देशस्य राजा कदापि न अङ्गीकरिष्यति इति सः जानाति स्म । अतः किं कर्तव्यम् इति अजानन् सः राजवैद्यं मार्गदर्शनं प्रार्थितवान् ।

राजवैद्यः अवदत् – ''सुदीर्घकालात् भवतः मनः अशान्तम् आसीत् । भवतः अशान्तेः दूरीकरणाय औषधम् एव नास्ति इति मम चिन्तनम् आसीत् । किन्तु गन्धर्वस्य गीतम् अपूर्वं परिवर्तनम् एव अकरोत् । तस्य गीते वैशिष्ट्यम् अस्ति इति तु सत्यम् । अतः प्रतिवेशिराजः सङ्गीतपुष्पं सम्पाद्य स्वामातुः व्याधिं यथा दूरीकृतवान् तथा भवान् अपि सङ्गीतपुष्पं सम्पाद्य स्वस्य अशान्तिं दूरीकरोतु । एषः एव उचितः मार्गः'' इति ।

प्रतिवेशिराजस्य प्रार्थनायाः अनुगुणं गन्धर्वः पुनरपि अरण्यं गतवान् । षण्मासानन्तरं सङ्गीतपुष्पं प्राप्य प्रतिवेशिराजाय दत्त्वा सः स्वदेशं प्रत्यागतवान् ।

कदाचित् पुलिन्दः चन्दनपुरयात्रां स्मारित-



वान् । तदा गन्धर्वः उक्तवान् - ''अहं चन्दनपुरं आगच्छन् अस्मि इति कुबेराय वार्तां प्रेषयतु । अहं तस्यैव अतिथिः भविष्यामि'' इति ।

एवं कथाम् उक्त्वा वेतालः अपृच्छत् - ''राजन् ! गन्धर्वस्य निर्णयपरिवर्तनं परिशीलयामः चेत् भासते यत् सः अव्यवस्थितचित्तः इति । सुचेलः तु गन्धर्वस्य आगमनं महता औत्सुक्येन प्रतीक्षमाणः आसीत् । योग्यस्य तस्य अतिथित्वस्वीकारं निराकृत्य किमर्थं वा गन्धर्वः कुबेरस्य अतिथित्वं स्वीकृतवान् ? यस्य सङ्गीते आदरः तस्यैव अतिथित्वस्य अङ्गीकारः खलु उचितः ? कुबेरः तु सङ्गीते अनासक्तः । तस्य गृहं प्रति गमनं किमर्थं चिन्तितवान् गन्धर्वः ? किम् अरण्यवासतः तस्मिन् वैराग्यम् उत्पन्नम् ? मम एतेषां प्रश्नानां समुचितम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''गन्धर्वस्य मनःपरिवर्तनस्य कारणं - सङ्गीतपुष्पम् । तस्य कारणतः तेन द्विवारं चन्दनपुरप्रयाणं व्याक्षेप्तव्यम् अभवत् । अग्रे अपि एतादृशी स्थितिः कदा आगच्छेत् इति न जानाति स्म सः । किन्तु सङ्गीतपुष्पम् उत्पादयितुम् अन्ये न शक्नुवन्ति इत्यतः एतादृशी अपेक्षा पुनः पुनः कुतश्चित् आगच्छेत् एव इति तु सः स्पष्टतया जानाति स्म । 'सुचेलाय यदि वार्ता प्रेष्यते तर्हि सः महतीं व्यवस्थां परिकल्प्य आगमनम् औत्सुक्येन प्रतीक्षते' इति जानन्, सुचेले निराशाभावं पुनः पुनः जनयितुम् अनिच्छन् च गन्धर्वः कुबेरस्य गृहं प्रति गमनं निश्चितवान् । कुबेरस्य तु तस्य आगमनविषये महत् औत्सुक्यं न आसीत् । अतः एव अगमनात् निराशा अपि न्यूना । एवं गन्धर्वस्य निर्णयः सुचिन्तनस्यैव फलं, न तु वैराग्यस्य चित्तवैकल्यस्य वा'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा वृक्षशाखाम् अवलम्बितवान् ।



भारतीयाः उत्सवाः

# आनन्दानुभवः

केरलेषु ओणम्-उत्सवः अतिप्रसिद्धः। तत्काले केरलीयानां गृहस्य पुरतः वर्णमय्यः पुष्पाकारिकाः रङ्गवल्ल्यः विराजन्ते। अनतिगभीरे जले सर्पमुखाकाराणां नौकानां चालने स्पर्धा अपि भविष्यति।

आ सहस्राधिक-वर्षेभ्यः केरले ओणम्-उत्सवः अतिप्रामुख्यम् आवहति। ८६१ तमस्य क्रिस्ताब्दस्य ताम्रशासने ओणम्-उत्सवस्य आचरणस्य उल्लेखः प्राप्यते।

यदा ऋतुवात-वहनस्य परिसमाप्तिः भवति तदा परिसरः हरिद्वर्णः स्वच्छः च भवति। तदा प्रचलति ओणम्। केरलेषु प्रसिद्धः अपरः उत्सवः 'विशुः' यश्च एप्रिल्मासे, तन्नाम धान्यागारं धान्यैः पूर्णं यदा भवति तदा, आचर्यते। एतौ उभौ अपि कालौ कृषिकाणां दृष्ट्या अल्पकार्ययुक्तौ। अतः एव तौ श्रमापनोदकौ, आनन्ददायकौ च। अतः ते उत्सवस्य आचरणे अत्यासक्ताः भवन्ति।

अगस्ट्-सप्टम्बर्मासयोः मध्यकालः 'चिङ्गोम्' मासः इति निर्दिश्यते केरलीयैः। स च केरलीयानां वर्षस्य प्रथमः मासः। श्रवणनक्षत्रम् उदेति तदा। उत्तरभारते श्रावणमासः भाद्रपदमासः वा प्रचलति तदा। जाति-मत-धनिक-निर्धनभेदं विस्मृत्य सर्वे केरलीयाः सप्ताहं यावत् वा ओणम्-उत्सवम् आचरन्ति एव। हस्त-श्रवणयोः (नक्षत्र-नामनी एते) मध्यकाले अयम् उत्सवः आचर्यते।



# महाबलिनः आगमनम्

प्राचीने काले असुरकुलोत्पन्नः महाबली केरलराज्यं पालयति स्म । सः न्यायपरः प्रजावत्सलः समर्थः च आसीत् । तस्य शासनकाले प्रजाः सुखेन जीवन्ति स्म । सः शौर्येण असदृशः आसीत् । अतः न केवलं भूलोकम्, अपि तु स्वर्गादीन् लोकान् अपि पालयति स्म सः ।



तस्य कीर्तेः विस्तारं देवाः सोढुं न शक्तवन्तः । सर्वे सम्भूय निर्णीतवन्तः यत् स्वर्गः स्वायत्तीकृतः यत् तदर्थं महाबली दण्डनीयः इति । एतदर्थं तैः विष्णोः साहाय्यं प्रार्थितम् ।

विष्णुः अवकाशं प्रतीक्षमाणः आसीत् । कदाचित् महाबली अश्वमेधयागम् आरब्धवान् । तदा विष्णुः वामनवेषं धृत्वा यागमण्डपम् आगतवान् । याचकेन यत् याच्यते तत् दातव्यम् एव इति तु यागनियमः । अतः वामनः यत् याचेत तत् दातुं सिद्धः आसीत् महाबली । वामनः त्रिपादपरिमितां भूमिं याचितवान् । महाबली दानम् अङ्गीकृतवान् । त्रिपादपरिमितायाः भूमेः दाने आक्षेपार्हः अंशः कोऽपि न आसीत् चेदपि गुरुः शुक्राचार्यः

आतङ्कयुक्तः जातः ।

वामनः त्रिविक्रमः जातः । सः एकेन पादेन भूमिम्, अपरेण च स्वर्गलोकं च आक्रान्तवान् । 'तृतीयः पादः मया कुत्र स्थापनीयः ?' इति सः महाबलिनं पृष्टवान् । वचनपालने बद्धादरः असुरचक्रवर्ती विनयेन शिरः अवनमितवान् । वामनः तृतीयं पादं महाबलिनः शिरसि संस्थाप्य तं पातालं प्रति प्रेषितवान् । वामनस्य अदृश्यतातः पूर्वं महाबली वरं याचितवान् - ''वर्षे एकवारम् अहं मम साम्राज्यं द्रष्टुम् आगन्तुम् इच्छामि'' इति ।



भूलोकं प्रति महाबलिनः आगमनं निमित्तीकृत्य 'ओणम्'-उत्सवः आचर्यते । ओणं-काले महाबली दशदिनाभ्यन्तरे प्रतिगृहम् आगत्य योगक्षेमादिकं परिशीलयति इति केरलीयाः भावयन्ति । अतः ते तस्य स्वागतार्थं विशेषव्यवस्थां कुर्वन्ति । प्रतिगृहं स्वच्छीक्रियते, अलङ्क्रियते च । उषसि एव देहल्याः पुरतः पर्ण-पुष्प-वर्णचूर्णादिभिः रङ्गवल्ली विरच्यते आकर्षकतया । पुष्पाकारयुक्ताः ताः 'पूक्कालम्स्' इति निर्दिश्यन्ते मलयाळभाषया । जनाः नूतनानि वस्त्राणि धृत्वा परस्परम् उपायनानि यच्छन्तः नृत्यादिभिः चक्रवर्तिनः स्वागतं

*ओणं-पर्वकाले महाबलिनः, तं पातालं प्रेषितवतः वामनस्य च पूजा क्रियते । चतुरस्राकारके मृत्पिण्डे महाबलिनः विष्णोः च आवाहनं कृत्वा पुष्पादिभिः अलङ्कृत्य पूजा क्रियते । प्राचीने काले वामनस्य पूजनं न आसीत् ।*





कुर्वन्ति ।

दशदिनात्मके एतस्मिन् उत्सवकाले रुचिकराणि खाद्यानि सज्जीक्रियन्ते ।

ओणं-पर्वसम्बद्धं 'कैकोट्टिकळि'नामकं नृत्यप्रकारम् अवलम्ब्य नृत्यन्ति महिलाः ।

उत्सवकालस्य प्रमुखम् आकर्षणम् - अनतिगभीरे जले नौकास्पर्धायाः व्यवस्थापनम् । फणाम् उन्नीतवतः सर्पस्य आकारेण भवन्ति एताः काष्ठनिर्मिताः नौकाः । स्पर्धादिने एतासु नौकासु शताधिकाः नौकाचालकाः उपविश्य समूहशक्त्या नौकां चालयन्ति । तदवसरे न केवलम् एताः दीर्घनौकाः, अपि तु लघुनौकाः, बालैः चाल्यमानाः उडुपाः चापि दृश्यन्ते नदीषु ।

एवम् अयम् उत्सवः केरलीयेषु आनन्दम् उत्साहं च महता प्रमाणेन पूरयति ।

## संयोजयन्तु

ओणं-सम्बद्धान् अधोनिर्दिष्टान् शब्दान् अर्थसूचकवाक्येन योजयन्तु उचितेन क्रमेण ।

| | |
|---|---|
| | अ. ओणं-दिने ध्रियमाणं नूतनं वस्त्रम् । |
| १. कैकोट्टिकळि | |
| २. ओणक्कोडि | आ. नौकास्पर्धा । |
| ३. पूक्कलम् | इ. ओणं-दिनीयः भोजनोत्सवः । |
| ४. वळ्ळङ्कळि | |
| ५. ओणस्सद्या | ई. जानपदनृत्यम् । |
| | उ. पुष्पैः भूमौ आरचिताः आकृतयः । |

उत्तराणि - १-ई, २-अ, ३-उ, ४-आ, ५-इ

# भारत-गौरव-गाथा

महासंस्कृत्याः स्थूलदर्शनम्, प्रतियुगं सत्यान्वेषणार्थं कृताः विशेषयत्नाः

## २०. राज्ञः वामनेत्रात् अश्रुपातः



"तात ! नदीतीरे स्थितस्य मन्दिरस्य पुरतः कश्चन यागः आचर्यमाणः अस्ति इति किं भवता ज्ञायते ? केचन धनिकाः तस्य व्ययस्य निर्वहणार्थं प्रभूतं धनं दानरूपेण दत्तवन्तः इति श्रूयते" इति उक्तवान् सन्दीपः ।

"एवम् !" इति वदन् अधिककुतूहलं कमपि अप्रदर्शयन् देवनाथवर्यः पत्रिकापठनं समापितवान् ।

पितामहस्य शान्तप्रतिस्पन्दं दृष्ट्वा किञ्चिदिव निराशः सन्दीपः अपृच्छत् - "तात ! एषः यागः शान्तिं वर्धयति इति प्रतिपादयन्ति आयोजकाः । किम् एतत् सत्यम् ?" इति ।

"अहं न जानामि । शान्तिः जनानाम् अन्तरङ्गे उद्भवेत् । न सा बाह्यविषयः । आयोजकानां मनसि हृदये च यदि शान्तिभावना स्यात् तर्हि तेषां यागाचरणम् अन्येषु कमपि परिणामं जनयेत् कदाचित्" इति उक्तवान् देवनाथवर्यः ।

"यदि शान्तिः हृदये न स्यात् तर्हि यागाद्याचरणं व्यर्थम् इति खलु भवतः आशयः ?" - सन्दीपः अपृच्छत् ।

"आम् ! ये यागं कारयन्ति तेषु परिशुद्धता, समर्पणचित्तता च यदि स्यात्, यदि परिसरे स्वच्छता शुद्धता च स्यात् तर्हि एव कारयितुः भागग्रहीतॄणां च मनसि कश्चन

अनुवर्तमाना कथामाला



प्रभावः स्यात् । तत्र उपयुज्यमानानां सुगन्धद्रव्यादीनाम् अपि कश्चन प्रभावः अन्येषां मनसि उत्पद्येत । यदि आचरणे श्रद्धा स्यात् तर्हि अपि कश्चन सत्परिणामः उत्पद्येत एव'' इति विवृतवान् देवनाथवर्यः ।

''किन्तु प्राचीने काले ये बहवः यागादयः आचरिताः तेषां विशेषपरिणामः कोऽपि न श्रूयते खलु ? सम्प्रदायशरणतामात्रं ज्ञायते खलु तेषाम् आचरणतः ?'' इति प्रश्नः श्रुतः ।

एषः प्रश्नः आसीत् सन्दीपस्य मातुः जयश्रियाः, या च चायचषकं गृहीत्वा प्रकोष्ठं प्रविष्टवती ।

देवनाथवर्यः मन्दहासपूर्वकं चायचषकं स्वीकृत्य चायं पिबन् अवदत् - ''वत्से ! यागस्य यः मूलविचारः आसीत् सः गच्छता कालेन विकृतिं गतः । परतत्त्वेन सह अभेदभावप्राप्तिः एव यागस्य मूलोद्देशः आसीत् । अहङ्कारस्य त्यागः, कृतस्य कर्मणः फलस्य भगवते अर्पणम् इत्यादयः यागस्य अङ्गानि आसन् । काम्ययागादयः केचन आसन्, किन्तु सर्वे यागाः काम्ययागाः एव न आसन् । काम्ययागो नाम - यत्र फलविशेषस्य प्राप्तिः सम्प्रार्थ्यते सः । कालान्तरे 'कस्याश्चित् अपेक्षायाः प्रार्थना एव यागः' इति भावः उत्पन्नः । एतां परम्पराम् एव अनुसरन्तः अद्यतनाः शान्त्यादिकं प्रार्थयन्ति । प्राचीने काले पुत्रादिनिमित्तम् ऐश्वर्यादिनिमित्तं वा यागाः कृताः दृश्यन्ते । आस्तां तावत् यागफलविषये चर्चा, यागः तु परशक्तेः मानवानां च मध्ये सम्बन्धं कल्पयति ।''

''तन्नाम, फलभेदात् यागप्रकारे अपि वैविध्यं दृश्यते स्म ननु ?'' इति पृष्टवती चमेली ।

''अग्नौ आहुतिसमर्पणम् इत्येतत् यागस्य बाह्यं रूपम् । यथा अग्निज्वालाः ऊर्ध्वमुखगामिन्यः, तथा अस्माकम् आकाङ्क्षाः अपि प्रगतिगामिन्यः स्युः । यथा अग्निः धातुषु विद्यमानं मालिन्यं दग्ध्वा पूतीकरोति तथा यागाः अस्मासु निहितान् अप्रशस्तांशान् अपनीय अस्मान् स्वच्छान्तरङ्गान् कुर्युः । यदा कश्चित् परतत्त्वाय आत्मानं समर्पयितुम् इच्छति तदा तस्य अन्तरङ्गे निरन्तरं यागः प्रचलेत् । लौकिकजीवने अपि तादृशान् वयं द्रष्टुं शक्नुमः, ये च यद्यत् समर्पयितुं शक्येत तत्सर्वं



विना सङ्कोचं समर्पितवन्तः अन्यहिताय । भवन्तः राज्ञः हरिश्चन्द्रस्य कथां स्मरेयुः एव । कर्णस्य कथा अपि ज्ञायते एव । कर्णः अङ्गभूतम् अपि कवचकुण्डलादिकं दत्तवान्, यतः याचकस्य अपेक्षापूरणं तेन प्रतिज्ञातम् आसीत् । कर्णस्य दानशीलतानिरूपिका अन्या अपि कथा श्रूयते । कदाचित् सः अतिथिभिः सह भोजनार्थम् उपविष्टः आसीत् । तदा पुत्र्याः विवाहार्थम् अपेक्षितं धनं याचन् कश्चन अर्थी तत्र उपस्थितः । कर्णः झटिति कण्ठे स्थितं सुवर्णहारं वामहस्तेन अपनीय तेनैव हस्तेन सेवकाय दत्त्वा उक्तवान् - 'एतत् तस्मै ददातु' इति । तदा पार्श्वस्थः अतिथिः आश्चर्येण कर्णं पृष्टवान् - 'यत् दीयते तत् दक्षिणहस्तेन दातव्यम् इति किं भवता विस्मृतम् ? भोजनं समाप्य खलु सुवर्णहारः दातुं शक्यः आसीत् ?' इति । तदा कर्णः अवदत् - 'मनः कदा परिवर्तितं भवेत् इति को वा जानाति ? यदा उत्तमाः विचाराः मनसि आयान्ति तदा एव तेषां क्रियान्वयनं झटिति चिन्तनीयम् । अन्यथा कालप्रभावात् मनसि परिवर्तनं यदाकदाचिदपि भवितुम् अर्हति' इति ।''

''किम् एतादृशाः अपूर्वव्यक्तित्वशालिनः इदानीम् अपि सन्ति ?'' इति कुतूहलेन पृष्टवान् सन्दीपः ।

''उदात्ताः, धैर्यशालिनः, शूराः च जनाः यथा पूर्वम् आसन्, तथैव सन्ति एव अद्यापि ।



वस्तुतस्तु ते सर्वे गुणाः अस्मासु अपि सन्ति एव । इतिहासपुराणादयः तादृशानाम् अपूर्व-सत्त्वशालिनां कथाः स्मारयन्तः अस्मासु उत्तमगुणान् जागरयन्ति । तादृशेषु उदात्त-गुणवत्सु मयूरध्वजः अपि अन्यतमः आसीत्'' इति उक्त्वा देवनाथवर्यः मयूर-ध्वजस्य कथाम् आरब्धवान् -

यदा युधिष्ठिरः हस्तिनापुरं पालयति स्म तदा राजा मयूरध्वजः रत्ननगरनामकं राज्यं परिपालयति स्म । उभयोः अपि राज्ञोः हितचिन्तकाः उपदिष्टवन्तः यत् राजसूययागः करणीयः इति । यः राजसूययागं करोति सः राज्ञां राजा भवति । यागाङ्गतया यागाश्वः प्रेष्यते । स च अश्वः यत्र यत्र सञ्चरति तत्र यदि कोऽपि तस्य अवरोधं न करोति तर्हि सः प्रदेशः यागकर्तुः अधीनः भवति । यागाश्वरक्षणार्थं समर्थाः धनुर्धारिणः केचन गच्छन्ति ।

युधिष्ठिरस्य अश्वम् अर्जुनः कृष्णः च अनुसरतः स्म । ताभ्यां ज्ञातं यत् मयूरध्वजस्य अश्वं तदीयः पुत्रः सुचित्रः अनुसरन् अस्ति, स च अश्वः अभिमुखम् एव आगच्छन् अस्ति इति । मयूरध्वजस्य चक्रवर्तित्वम् अङ्गीकृतं यथा न भवेत् तथा तदीयः अश्वः अवरोद्धव्यः इति तौ निर्णीतवन्तौ ।

किन्तु आश्चर्यं नाम मयूरध्वजस्य अश्वः यदा आसन्नः तदा कृष्णार्जुनौ किमपि वक्तुं कर्तुं वा सर्वथा असमर्थौ जातौ ।

कश्चित् उक्तवान् यत् मयूरध्वजस्य श्रेष्ठता-कारणतः एवं जातम्, मयूरध्वजः अर्थिनः अपेक्षां पूरयितुं महान्तम् अपि त्यागं कर्तुं समर्थः भवति इति ।

एतत् परीक्षितुम् इच्छन्तौ कृष्णार्जुनौ प्रयाणिकवेषं धृत्वा मयूरध्वजस्य समीपं गतवन्तौ ।

कृष्णः अवदत् - ''आवां सपरिवारम् अरण्यमार्गेण आगच्छन्तौ आस्व । तत्काले कश्चन घोरः सिंहः मम पुत्रं गृहीत्वा गुहां प्रति नीतवान् । 'तं विमोच्य अस्मासु कश्चित् खादतु' इति वयं सिंहं प्रार्थितवन्तः । 'परम-सात्त्विकस्य पुरुषस्य मांसं यदि प्राप्येत तर्हि अहम् एतं बालकं त्यजेयम् । परमसात्त्विकस्य समग्रं शरीरं न प्राप्तं चेत् अर्धभागेन अपि अहं तृप्तः स्याम्' इति वदन् सिंहः असूचयत् यत् मयूरध्वजः एव परमसात्त्विकः इति ।

राजन् ! किं भवान् मम पुत्रस्य रक्षणार्थं स्वस्य शरीरस्य अर्धभागं दद्यात् ?'' इति ।

तदा पार्श्वे एव स्थित्वा एतत्सर्वं श्रुतवती मयूरध्वजस्य पत्नी अवदत्- ''पत्नी अर्धाङ्गिनी इति उच्यते । अतः मां सिंहसमीपं नयतु । अहं भवतः पुत्रस्य विमोचनार्थं मम शरीरं दास्यामि'' इति ।

''महाराज्ञि ! पत्नी पत्युः वामार्धत्वेन परिगण्यते । सिंहः तु राज्ञः दक्षिणभागम् एव इच्छति'' इति अवदत् कृष्णः ।

तदा राजा मयूरध्वजः उत्थाय - ''कुतो विलम्बः ? यदि विलम्बः क्रियेत तर्हि बुभुक्षावशात् सिंहः भवतः पुत्रं मारयेत् अपि । अतः शीघ्रम् एतेन खड्गेन मम शरीरं द्विधा विदारयतु । दक्षिणभागं नीत्वा सिंहाय अर्पयतु च'' इति अवदत् ।

कृष्णः खड्गम् उन्नीय मयूरध्वजस्य शरीरं विदारयितुं यावत् उद्युक्तः तावता मयूरध्वजस्य वामनेत्रतः अश्रुधारापतनम् आरब्धम् । एतत् कृष्णेन लक्षितम् ।

''शरीरस्य अर्धभागस्य दाने भवतः सर्वथा अनिच्छा । अतः एव भवतः नेत्रतः अश्रुधारा निर्गच्छति । असन्तोषेण दत्तं दानं स्वीकारार्हं न भवति इति किं भवान् न जानाति ?'' इति अपृच्छत् कृष्णः ।

''असन्तोषः सर्वथा नास्ति मम । अश्रुपातः वामनेत्रतः खलु दृश्यते ? दक्षिणभागस्य यत् सौभाग्यं तत् मम नास्ति खलु इति वामभागः चिन्तयति । अतः एव वामनेत्रतः अश्रुपातः'' इति उक्तवान् मयूरध्वजः ।

एतत् श्रुत्वा कृष्णः अर्जुनः च मयूरध्वजस्य श्रेष्ठताम् अङ्गीकृतवन्तौ । तेन आयोजिते यागकार्यक्रमे सन्तोषेण भागम् ऊढवन्तौ च । ततः युधिष्ठिरस्य यागे मयूरध्वजः अपि भागम् ऊढवान् ।

''श्लाघार्हा कथा एषा !'' इति उक्तवती जयश्रीः ।

''मानवशक्तौ पूर्वजानां यः विश्वासः आसीत् सः अपि श्लाघार्हः एव । एतादृश-कथानां श्रवणतः वयं पूर्वजानां व्यवहारौन्नत्यम् अवगन्तुं शक्नुमः'' इति उक्तवान् देवनाथ-वर्यः ।



# अपूर्वः नृत्यप्रकारः

भरतनाट्यस्य आकर्षकं मनोमोहकं पदविन्यासं दृष्ट्वा को वा रसिकः प्रमुदितान्तरङ्गः न स्यात् ? भरतनाट्यम् एतत् स्वयं ब्रह्मणा एव सृष्टम् ।

कदाचित् देवाः गन्धर्वाः च ब्रह्मणः समीपं गत्वा निवेदितवन्तः - 'सर्वाणि अपि इन्द्रियाणि सन्तुष्टानि यथा स्युः तथा कश्चन सुन्दरः पञ्चमवेदः स्रष्टव्यः' इति । तदा ब्रह्मा चतुर्भ्यः अपि वेदेभ्यः एकैकम् अंशम् उद्धृत्य नाट्यवेदं सृष्टवान् । ऋग्वेदात् पाठ्यं, यजुर्वेदतः अभिनयं, सामवेदतः सङ्गीतम्, अथर्ववेदतः रसं च स्वीकृत्य नाट्यवेदं रचितवान् सः ।

ततः एतं भरतमुनये दत्त्वा सः उक्तवान् - 'एतत् मानवान् बोधयतु' इति । रूपक-नाट्य-सङ्गीतादि-तन्त्राणि योजयित्वा भरतमुनिः *'नाट्यशास्त्रं'* रचितवान् । अतः एतत् नाट्यं भरतनाट्यत्वेन प्रसिद्धं जातम् ।

भरतनाट्यम् अतिप्राचीनः भारतीयः नाट्यप्रकारः । एतस्य नाट्यस्य विविधाः भङ्ग्यः तमिळुनाडुराज्यीयमन्दिरेषु उत्कीर्णानि दृश्यन्ते । 'शिलप्पधिकारम्' 'मणिमेखलै' इत्येतयोः प्राचीनतमिळु-



कृत्योः एतस्य नाट्यस्य उल्लेखः दृश्यते । एते कृती 'सङ्घ'कालीने ।



भगवान् शिवः नाट्यशास्त्रस्य अधिदेवः इति तु भारतीयः विश्वासः । शिवः पार्वती च एतस्य नाट्यस्य विविधभङ्गीः रूपितवन्तौ । शीघ्रगत्या शिवेन क्रियमाणं नृत्यं *'ताण्डवनृत्यम्'* इति उच्यते । आनन्देन क्रियमाणं तदेव उच्यते - *'आनन्दताण्डवम्'* इति । तदेव रौद्ररसोपेतं सत् निर्दिश्यते - *'रुद्रताण्डवम्'* इति । पार्वत्या क्रियमाणं तदेव नाट्यं कोमलं सत् *'लास्यम्'* इति उच्यते ।

भरतनाट्यावसरे यानि गीतानि गीयन्ते तेषां विषयः पुराणकथादिभ्यः चीयते । यः गीतानि गायति सः उच्यते - 'नट्टुवनर्' इति । मृदङ्गः वीणाविशेषः च गानावसरे अन्याभ्यां वाद्यते ।

प्रायः पूर्वं देवदास्यः भरतनाट्यस्य प्रदर्शनं कुर्वन्ति स्म । राजास्थानेषु राजनर्तक्यः एतत् नृत्यं दर्शयन्ति स्म । तमिळुनाड्डुराजाः बहवः एतस्य नृत्यप्रकारस्य सङ्गीतस्य च प्रोत्साहनं कृतवन्तः ।

दौर्भाग्यवशात् विंशतितमशतकस्य आरम्भकाले एतस्य नृत्यप्रकारस्य विशेषह्रासः दृष्टः । शासननियमैः देवदासीपद्धत्याः निवारणार्थं प्रयासाः प्रवृत्ताः । किन्तु भरतनाट्यप्रियाणां बहूनां परिश्रमस्य फलतः अनन्तरकाले तस्य वृद्धिः जाता ।



- भरतनाट्ये यानि अक्षराणि सन्ति तेषु **'भाव'**शब्दात् भकारः **'राग'**शब्दात् रकारः, **'ताल'**शब्दात् तकारश्च स्वीकृतः । एवं भरतनाट्ये भाव-राग-ताल-नाट्यानां सङ्गमः भवति ।
- नाट्यकारः ऐदम्प्राथम्येन सार्वजनिकतया नृत्यं यत् प्रदर्शयति तस्य विशेषमहत्त्वं भवति । *'रङ्ग-प्रवेशः'* इति तस्य नाम । सः तमिळु-भाषया निर्दिश्यते - *'आरङ्गेट्रम्'* इति ।
- रङ्गप्रवेशसमये आदौ *'नूपुरपूजा'* ('सालङ्गैपूजा' इति तमिळुपदम्) क्रियते । यावत् रङ्गप्रवेशः न भवति तावत् नूपुरधारणं न अनुमन्यते स्म प्राचीने काले ।

स्वातन्त्र्योत्तरकाले इ. कृष्णअय्यर्, बालसरस्वती, रुक्मिणीदेवी अरुण्डेल्, कलानिधिः, शान्ताराव् इत्यादयः एतस्य विकासार्थं विशेषपरिश्रमं कृतवन्तः ।

## बङ्गालीया जानपदकथा

पश्चिमवङ्गराज्यं त्रिभिः देशैः आवृतम् अस्ति । ते च - बाङ्गूला-देशः, नेपालः, भूतानश्चेति । २१°-२७° अक्षांशयोः मध्ये, बङ्गालखातस्य ऊर्ध्वभागे, ८६°-८९° रेखांशयोः मध्ये च अस्ति एतत् राज्यम् । 'क्रान्तिवृत्तम्' एतस्य मध्ये अस्ति ।

भारतस्य तीरप्रदेशस्थेषु नवसु राज्येषु अन्यतमम् अस्ति पश्चिम-वङ्गराज्यम् । भौगोलिकं, सामाजिकं, परिसरसम्बद्धं च वैविध्यं प्राधान्येन दृश्यते इति तु एतस्य राज्यस्य वैशिष्ट्यम् । हिमालयपर्वतश्रेणीभागाः समुद्रवातान् अवरुध्य अत्र वृष्टिं जनयन्ति । एतस्मिन् राज्ये विशालम् अरण्यम्, उन्नतानि पर्वतशिखराणि च परिदृश्यन्ते । सप्तानां पर्वतीयराज्यानां प्रवेशद्वारायते वङ्गराज्यम् । एतस्य विस्तारः ७५२ चतुरस्र कि.मी.मितः । जनसङ्ख्या च ८,७२,२१,१,७१ मिता ।

पश्चिमवङ्गराज्ये स्थिते 'सुन्दरबन'-नामके अरण्ये विशिष्टाः ''बङ्गाल-व्याघ्राः' वसन्ति । व्याघ्रसन्ततिरक्षण-योजनायाः अङ्गतया एतत् सुन्दरबन-अरण्यं व्याघ्रवासभूमित्वेन, राष्ट्रियोद्यानत्वेन च घोषितम् अस्ति ।

# विधातृ-ब्राह्मणयोः कलहः

पूर्वं बङ्गालराज्ये सोनारपुरनामके ग्रामे कश्चन ब्राह्मणः निवसति स्म । तस्य भाग्यं विलक्षणम् आसीत् । सः कदापि पूर्णोदरतया भोजनं कर्तुं न शक्नोति स्म । कोऽपि प्रसङ्गः भोजनसमये विघ्नम् उत्पादयति स्म एव । विधात्रा तस्य ललाटे तादृशम् एव भाग्यं लिखितम् आसीत् ।

कदाचित् सः महाराजस्य आस्थानात् उत्सवे



भागग्रहणाय निमन्त्रणं प्राप्तवान् । एतस्मात् सः नितरां सन्तुष्टः । सः पत्नीम् अवदत् - ''एतदवसरे वा मया पूर्णोदरं भोजनं करणीयम् । अतः मम वस्त्राणि भवती क्षालयित्वा सज्जीकरोतु । राजास्थाने मम वेषः शोभेत'' इति ।

ततः सः वेष्टीं कौशेययुतकं च धृत्वा आस्थानं प्रति प्रस्थितवान् । क्षेत्राणि, शाद्वलानि च अतिक्रामन् सः अग्रे गतवान् ।

आस्थाने अधिकारिणः तं सादरं स्वागतीकृतवन्तः । भोजनसमये रजत-स्थालिकायां विविधानि भक्ष्याणि परिवेषितानि । उत्कृष्टेन तण्डुलेन निर्मितम् अन्नं, षड्रसोपेतानि व्यञ्जनादीनि, विंशत्यधिकविधानि मधुरभक्ष्याणि च परिवेषितानि ।

ब्राह्मणः आनन्देन भोजने मग्नः आसीत् । अत्रान्तरे तस्य शिरसः ऊर्ध्वभागे शिक्यायां स्थापितं मृन्मयं दधिपात्रं कथमपि भग्नम् अभवत् । तच्च तस्य स्थालिका-समीपे एव पतितं सत् भग्नम् । मृत्पात्रखण्डाः ब्राह्मणस्य स्थालिकायाम् अपि पतिताः । अनन्यगतिकतया ब्राह्मणः भोजनं परित्यज्य उत्थितवान् ।

किञ्चित्कालानन्तरं यदा सः आस्थानात् निर्गन्तुम् उद्युक्तः तदा राजा अपृच्छत् - ''सेवकाः यथायोग्यं परिवेषितवन्तः इति भावयामि । भोजनं तृप्तिकरम् आसीत् ननु ?'' इति ।

''परिवेषणं तु यथायोग्यम् आसीत्



## वङ्गराज्ये करकौशलोद्यमः

पश्चिमवङ्गदेशः करकौशलकार्यनिमित्तं प्रसिद्धम् अस्ति । अत्र यानि करकौशलवस्तूनि निर्मीयन्ते तानि समग्रे देशे जनप्रियाणि जातानि



सन्ति । तङ्गैल्, धनेकली इत्यादयः ग्रामाः हस्तनिर्मित-वस्त्रकारणतः ख्याताः । मुर्शिदाबाद-प्रभृतयः ग्रामाः कौशेयवस्त्रनिर्माणार्थं ख्याताः ।

बङ्कुरा, विष्णुपुरं च दग्धमृत्तिकानिर्मित-पाञ्चालिकानिमित्तं करकौशलवस्तुनिर्माणार्थं च सुविख्यातम् । विष्णुपुरे स्थिताः दग्धमृत्तिकया निर्मिताः प्राचीनाः देवालयाः अद्यापि सुस्थितौ सन्ति । एतस्मिन् नगरे शुक्तिनिर्मितवस्तूनि, सुवर्णाद्याभरणानि, बालचेरिशाटिकाः, कौशेयशाटिकाः इत्यादयः आधिक्येन निर्मीयन्ते ।

कुमार्तुलिनगरं शिल्पकलानिमित्तं जगति एव प्रसिद्धम् । दुर्गापूजानिमित्तं दुर्गायाः अन्यदेवानां च रमणीयाः महामूर्तयः लघुमूर्तयः च महता प्रमाणेन निर्मीयन्ते अत्र । अत्र निर्मिताः मूर्तयः एव भारते अन्यदेशेषु च बङ्गालीयजनानां गृहेषु पूज्यन्ते प्रायः ।

'पुरुलिया च्यू' इति नाम्ना ख्यातं समर-कलानृत्यं 'पुरुलिया'जनपदे विशेषतः दृश्यते । एतस्य नृत्यप्रकारस्य कारणतः 'च्यू'नामकं मुखावरणं मृत्तिका-निर्मितवस्तूनि च जनप्रियतां गतानि सन्ति ।





एव । तथापि मया आतृप्ति भोजनं कर्तुं न शक्तम्। मम हतभाग्यता एव अत्र कारणम्'' इति उक्त्वा ब्राह्मणः स्वस्य दौर्भाग्यकथां श्रावितवान् ।

एतत् श्रुत्वा खिन्नः महाराजः अवदत् - ''भवान् अद्य रात्रौ अत्रैव वसतु । श्वः अहं मम हस्ताभ्याम् एव परिवेषयिष्यामि, येन भवान् आतृप्ति भोजनं कुर्यात्'' इति । ब्राह्मणः एतत् अङ्गीकृतवान् ।

अनन्तरदिने विशेषपाकः सज्जीकृतः । महाराजः स्वयं पाकनिपुणः आसीत् । अतः केचन पाकपदार्थाः तेन स्वयं सज्जीकृताः । यदा सर्वं सिद्धं तदा ब्राह्मणः भोजनार्थं उपविष्टवान् ।

## वङ्गराज्ये उत्सवाः



वङ्गराज्ये 'दशहरा'पर्व प्राधान्येन आचर्यते । असुरस्य महिषासुरस्य संहारः यः कृतः तन्निमित्तं दुर्गा अत्र परमया भक्त्या पूज्यते । एषः उत्सवः अक्टोबर्-नवम्बर्मासयोः अन्यतरस्मिन् मासे प्रचलति ।

जनवरीमासे सागरद्वीपप्रदेशे मकरसङ्क्रमणं 'गङ्गासागरमेला'नाम्ना आचर्यते । बङ्गालीयानां नववर्षारम्भः भवति एप्रिल्मासे । सप्टम्बर्मासे प्रसिद्धस्य शिल्पिमुख्यस्य विश्वकर्मणः पूजा क्रियते यन्त्रागारेषु, उद्योगकेन्द्रेषु च । एतम् उत्सवं निमित्तीकृत्य वाताटस्य उड्डायनं कुर्वन्ति जनाः ।

दीपावलीकाले श्यामायाः (काली इति अपरं नाम) पूजा क्रियते भक्त्या ।

भोजनस्थले पतनयोग्यं, भङ्गयोग्यं वा किमपि यथा न भवेत् तथा व्यवस्था कल्पिता आसीत् । एतत्सर्वं दृष्ट्वा विधाता नितरां चिन्ताक्रान्तः । 'एतस्य भोजने केन प्रकारेण मया विघ्नः उत्पादयितुं शक्येत ?' इति बहुधा विचिन्त्य सः लघुसुवर्ण-मण्डूकरूपं धृत्वा ब्राह्मणस्य स्थालिकां प्राविशत् । सन्तोषेण अन्नं खादन् ब्राह्मणः मण्डूकप्रवेशम् अजानन् अन्नेन सह मण्डूकम् अपि अगिलत् । आतृप्ति भोजनं कृत्वा उत्कृष्टं ताम्बूलं चर्वित्वा महाराजेन दत्तानि विविधानि उपायनानि वहन् सः गृहं प्रति प्रस्थितवान् ।

यदा सः ग्रामं प्रति गच्छन् आसीत् तदा तेन कश्चन ध्वनिः श्रुतः - "अयि भोः ब्राह्मणोत्तम ! मां बहिः प्रेषयतु कृपया । मां मुञ्चतु" इति ।

ब्राह्मणः परितः दृष्टिं प्रसारितवान् । तत्र कोऽपि न आसीत् । 'मम भ्रान्तिः स्यात्' इति चिन्तयन् सः अग्रे गतवान् ।

किञ्चित्कालानन्तरं पुनः ध्वनिः श्रुतः - "ब्राह्मणोत्तम ! त्वरया गन्तव्यम् अस्ति मया" इति ।

"कः भवान् ?" इति अपृच्छत् ब्राह्मणः ।

"अहं विधाता" इति क्षीणः स्वरः श्रुतः ।

"कुत्रास्ति भवान् ?" पुनः अपृच्छत् ब्राह्मणः ।

"भवतः उदरे । भवतः भोजनावसरे मण्डूकरूपेण मया भवतः स्थालिका प्रविष्टा । भवान् अनवधानवशात् मां गीर्णवान्" इति अवदत् विधाता ।

"विना विघ्नं मम भोजनं कथं सम्पन्नम् इति अहं बहुधा चिन्तयन् आसम् । भवन्तं गीर्णवता मया उत्तमम् एव कृतम् । इतःपरं भवान् मां पीडयितुं न अर्हति । भवन्तं न मुञ्चामि । एषोऽहं मम मुखस्य पिधानं करोमि, येन भवान् सर्वथा बहिः न गच्छेत्" इति उक्त्वा मुखं सुदृढं पिधाय ततः अग्रे गतवान् ब्राह्मणः ।

विधाता दैन्येन प्रार्थितवान्, क्रन्दनं कृतवान्, आक्रोशनं च कृतवान् । तथापि ब्राह्मणः तु तं न मोचितवान् ।





''देवि ! भवत्याः निमित्तं किं मया कर्तुं शक्येत ?'' इति पृष्टवान् ब्राह्मणः ।

''विधाता भवता निगृहीतः अस्ति । तं मुञ्चतु कृपया । तस्य अनुपस्थित्या प्रपञ्चस्य सर्वे व्यवहाराः स्थगिताः सन्ति'' इति उक्तवती लक्ष्मीः ।

एतत् श्रुतवतः ब्राह्मणस्य कोपः प्रवृद्धः । सः पत्नीम् अवदत् - ''अये ! मम दण्डम् आनयतु तावत् । अद्यावधि मां कटाक्षेण द्रष्टुम् अपि अनर्हं भावयति स्म एषा । इदानीं वराकस्य एतस्य विधातुः कारणतः मम पुरतः उपस्थिता अस्ति । इतःपूर्वं कुत्रापि यादृशम् उपायनं न प्राप्तं तादृशम् एतस्यै दास्यामि तावत् । दण्डप्रहारेण सत्करिष्यामि एताम् । शीघ्रं दण्डम् आनयतु तावत्'' इति ।

एतत् श्रुत्वा लक्ष्मीः झटिति उत्थाय ततः धावितवती । इतःपूर्वं कोऽपि ताम् एवं न उक्तवान् आसीत् । सा देवलोकं प्रतिगत्य प्रवृत्तं समग्रं देवान् उक्तवती ।

तदा देवाः विद्याधिदेवतां सरस्वतीं सूचितवन्तः - 'भवती उपायेन विधातुः विमोचनं साधयतु' इति ।

सरस्वती भीत्या एव ब्राह्मणस्य गृहं गतवती । ताम् अपि स्वागतीकृत्य ब्राह्मणः विनयेन अपृच्छत् - ''देवि ! किं साहाय्यम् अहं करवाणि ?'' इति ।

सरस्वती विधातुः विमोचनम्

एतस्मिन् एव काले विधातुः अभावतः त्रिषु अपि लोकेषु हाहाकारः उत्पन्नः । प्रपञ्चव्यवहारचक्रं तेनैव खलु प्रवर्तनीयम् आसीत् ? तस्य अनुपस्थित्या सर्वं स्तब्धं जातम् । एतस्याः समस्यायाः परिहारार्थं देवानां सभा झटिति आकारिता । सर्वे देवाः उपस्थिताः । बहुधा विचिन्त्य सर्वे ऐश्वर्यस्य सौभाग्यस्य च अधिदेवतां लक्ष्मीम् उक्तवन्तः यत् भवती ब्राह्मणसमीपं गत्वा कथञ्चित् विधातुः विमोचनं साधयतु इति ।

एतत् कार्यं लक्ष्म्याः यद्यपि प्रियं न आसीत्, तथापि अनन्यगतिकतया सा ब्राह्मणसमीपं गतवती । ब्राह्मणः तां दृष्ट्वा आश्चर्यचकितः । सः झटिति उत्थाय तस्यै आसनं दत्त्वा नमस्कृतवान् ।

अभ्यर्थितवती । तदा पुनरपि क्रुद्धः ब्राह्मणः पत्नीम् उद्दिश्य - ''अये ! एषा अपि विशेषसत्कारार्थं योग्या अस्ति । मम अध्ययनकाले एषा मां ज्ञानदानेन न अनुगृहीतवती । इदानीं विधातुः पीडातः अहं यदा मुक्तः अस्मि तदा आगत्य तस्य विमोचनं प्रार्थयते । मत्तः विमुक्तः सः किं मां पुनरपि न पीडयेत् ? अहं न मूर्खः । दण्डम् आनयतु तावत् । यथायोग्यं दण्डयिष्यामि एताम्'' इति अवदत् ।

सरस्वती अपि निराशतया प्रतिगतवती । ततः शिवः एव स्वयं ब्राह्मणस्य गृहम् आगतः । ब्राह्मणः शिवस्य परमभक्तः । सः शिवम् आदरेण स्वागतीकृत्य सत्कृत्य पूजयित्वा - ''मया किं करणीयं महादेव ! आदिशतु तावत्'' इति अवदत् ।

शिवः अपि विधातुः मोक्षम् अभियाचितवान् । तदा ब्राह्मणः अवदत् - ''महादेव ! भवान् तु विधातुः विमोचनम् इच्छति । किन्तु मम समस्यायाः परिहारः कथं भवेत् ? एतावत्पर्यन्तं मया दयनीयं जीवनं यत् यापितं तस्य कारणम् आसीत् एषः विधाता एव'' इति ।

''तद्विषये अलं चिन्तया । अहं भवन्तं स्वर्गं प्रति नेष्यामि । विधातुः पीडा भवतः कदापि यथा न स्यात् तथा करिष्यामि'' इति आश्वासनं दत्तवान् शिवः ।



ततः ब्राह्मणः मुखम् उद्घाट्य विधातुः निर्गमनार्थम् अवकाशं कल्पितवान् । दत्तस्य वचनस्य अनुगुणं शिवः ब्राह्मणं तत्पत्नीं च सशरीरं स्वर्गं प्रापितवान् ।

### *प्रवासयोग्यानि स्थलानि*

पश्चिमवङ्गस्य राजधानी 'कोल्कत्ता' प्राचीना ऐतिहासिकमहत्त्वोपेता नगरी । विक्टोरियास्मारकं, हौरासेतुः, कालीघाटप्रदेशे दक्षिणेश्वरे च स्थिते दुर्गामन्दिरे च अत्र दर्शनीयेषु अन्यतमानि ।

हिमालयोपत्यकायां स्थितं दार्जिलिङ्ग् प्रसिद्धं पर्वतीय-केन्द्रम् । शिलिगुरितः दार्जिलिङ्गपर्यन्तं यत् अल्पाकारकं ट्रेन्यानं सञ्चरति तत् पर्यटकानां मनः आकर्षति ।

दार्जिलिङ्गप्रदेशे प्रकृति-सौन्दर्यम् अपूर्वम् । शीतलः परिसरश्च मनोहरः । एतत्समीपस्थानि अन्यानि प्रमुखस्थानानि - कालिम्पाङ्ग, कुर्सियाङ्ग्, व्याघ्रपर्वताः च ।

अतिश्रेष्ठस्तरीयाणि चाय-चूर्णानि दार्जिलिङ्गप्रदेशे एव निर्मीयन्ते ।

कोल्कतातः अनतिदूरे गुरुदेवेन रवीन्द्रनाथवर्येण संस्थापितं विश्वविख्यातं विद्याकेन्द्रं 'शान्तिनिकेतनं' विराजते । जगति एव कला, करकौशलम् इत्यादीनाम् अध्ययनार्थं ख्यातः विश्व-भारतीविश्वविद्यालयः अत्रैव अस्ति ।

# बुद्धिमान् बीरबलः



चक्रवर्ती अक्बरः सिंहासने उपविश्य सकृत् परीक्षात्मक-दृष्टिं परितः प्रसार्य अपृच्छत् - ''पुष्पेषु श्रेष्ठं किम् ?'' इति । सभासदः एतं प्रश्नं श्रुत्वा परस्परं मुखं दृष्टवन्तः ।

एकः उत्थाय महाराजसमीपं गत्वा कूपीस्थस्य सुगन्धद्रव्यस्य एकं बिन्दुं स्वस्य हस्तस्य पृष्ठभागे पातयित्वा राज्ञः नासिकायाः पुरतः गृहीतवान् । ''पाटलपुष्पम् एव श्रेष्ठम् इति भवतः आशयः ननु ?'' इति राजा अपृच्छत् । सभासत् मन्दहासं प्रकटितवान् ।





राज्ञः मुखात् प्रतिवचनं यदा किमपि न निर्गतं तदा अपरः कश्चन उत्थाय स्वस्य दक्षिणहस्ते स्थितां मल्लिकामालां दर्शयन् अवदत् - ''मल्लिका एव पुष्पेषु श्रेष्ठा'' इति ।

राज्ञा अत्र सहमतिः न दर्शिता । तदा अपरः उत्थाय स्तम्भे उत्कीर्णं कमलं दर्शयन् - ''कमलानि एव पुष्पेषु श्रेष्ठानि । अतः एव तानि भवतः प्रियाणि'' इति अवदत् ।





राज्ञः मुखे तृप्तिः न दृष्टा । तदा अन्यः उत्थाय सिंहासनपार्श्वे स्थितं पुष्पगुच्छं दर्शयन् - ''एतानि एव श्रेष्ठानि । यतः एतानि राजोद्यानात् आनीतानि'' इति अवदत् ।



''पुष्पाणि सुगन्धीनि स्युः, श्वेतानि स्युः, सुन्दराणि वा स्युः । सुगन्धद्रव्ये उपयुक्तानि, मालारूपेण स्थितानि, स्तम्भे उत्कीर्णानि, पुष्पगुच्छे योजितानि वा स्युः । तथापि...'' इति उक्त्वा सः अपृच्छत् - ''बीरबलः कः ? किमर्थं मौनेन तिष्ठति सः ?'' इति ।



''अहम् अत्र अस्मि'' इति वदन् उत्थाय बीरबलः अवदत् - ''कार्पासपुष्पाणि एव श्रेष्ठानि'' इति । एतत् श्रुत्वा सर्वे आश्चर्यचकिताः । 'कथं कार्पासपुष्पाणां श्रेष्ठता ?' इति तैः न अवगतम् ।

''महाराज ! वयं यानि वस्त्राणि धरामः तानि कार्पासतः निर्मितानि । कार्पासस्य च कारणं कार्पासपुष्पम् एव । यत् जीवनोयोगि भवति तदेव श्रेष्ठम्'' इति अवदत् बीरबलः । सन्तुष्टः राजा कण्ठस्थं रत्नहारं निष्कास्य बीरबलस्य कण्ठे अर्पितवान् ।



# वार्ताविशेषाः

## अन्यसाहाय्यं विनैव गगनयात्रा

चतुर्भ्यः मासेभ्यः पूर्वं डेन्नीस् टिटो नामकः अमेरिकादेशीयः कोटीश्वरः रशियादेशीयाभ्यां गगन-यात्रिकाभ्यां सह अन्ताराष्ट्रिय-अन्तरिक्षस्थानके सप्ताहं यावत् वासं कृत्वा प्रत्यागतवान् । एषा यात्रा इदानीं विवादविषयतां गता अस्ति । एतादृशं विवादविषयी-भवनं न इच्छति स्टेव् बेन्नेट्टः । ब्रिटन्-देशीयः एषः वृत्त्या दन्तफेनतन्त्रज्ञः । तस्य इच्छा स्वगगननौकया एव अन्तरिक्षे प्रयाणं करणीयम् इति । एतस्य वर्षस्य अन्तिमे भागे तदीया गगननौका सिद्धा भवेत् । सा च तम् अन्तरिक्षे ६२ मैल् दूरं नेतुं समर्था । बेन्नेट्टः स्वयं विमानचालकः । तदीया गगननौका ३० पादपरिमित-दैर्घ्ययुक्ता, प्रतिघण्टं ६४०० कि.मी.वेगेन गन्तुं समर्था च । अन्यसाहाय्यं विनैव गगनयात्रा करणीया इत्यस्ति बेन्नेट्टस्य सङ्कल्पः ।






## केवलाय मनोविनोदाय !...

कश्चन साहसप्रियः कदाचित् सङ्कल्पितवान् यत् पेरिस्नगरे स्थितस्य एफेल्भवनस्य शिखरतः प्याराचूट्-साहाय्येन भूमिः प्राप्तव्या इति । एतदनुगुणं प्रयत्नं कृतवान् अपि सः । यदा सः भूमिं प्राप्तवान् तदा आरक्षकाः तं बन्धुम् उद्युक्ताः । तेन उक्तं - 'मया नियमभङ्गः कोऽपि न कृतः' इति । तस्य बन्धनार्थम् उपकारकं कमपि नियमं न प्राप्तवन्तः आरक्षकाः । 'एतत्सर्वं किमर्थं क्रियते' इति पृष्टः सः हसन् अवदत् - 'केवलाय मनोविनोदाय !' इति ।




## अध्यापकं विरुध्य एव न्यायिकव्यवहारः !

यदा कश्चित् आसन्दे उपवेष्टुम् उद्युक्तः भवति तदा आसन्दस्य हठात् अपसारणं कृत्वा उपवेष्टुम् उद्युक्तं पातयन्ति खलु विद्यालयादिषु स्थिताः केचन दुश्चेष्टापराः ? एतादृशी एव घटना न्यूयार्क्नगरे प्रवृत्ता । क्षुल्लककारणम् अवलम्ब्य अपि कथं न्यायिकव्यवहारः कर्तुं शक्यः इति विवृण्वन् न्यायवादी कश्चन उपवेष्टुम् उद्युक्तायाः विद्यार्थिन्याः आसन्दम् अपनीतवान् । तस्मात् व्रणिता सा ५००,००० डालराणि अपेक्षमाणा अध्यापकं विरुध्यैव न्यायिकव्यवहारम् आरब्धवती अस्ति ।

## विनाशदशायां भाषा...

पशूनां, पक्षिणां, वृक्षाणां च सम्पत्तेः नाशदशाम् अधिकृत्य वयं चिन्ताक्रान्ताः भवामः । भाषाः अपि काश्चन एवम् एव विनाशदशां गताः इति श्रूयते । अमेरिकादेशे अलस्काप्रदेशे स्थिता एयक्भाषा तादृशीषु अन्यतमा । तां भाषां ८३ वर्षीयः मरे स्मित्नामकः एकः एव जानाति । सः यदि दिवं गच्छेत् तर्हि एयक्भाषा अपि विलयं गच्छेत् । युनेस्को अभिप्रैति यत् प्रपञ्चे सार्धद्विसहस्राधिकजनैः भाष्यमाणा भाषाः ६८०० स्युः इति । यदि तासां रक्षणार्थं योग्यः उपायः न क्रियते तर्हि तासु बह्व्यः अग्रिमे शत-वर्षात्मके कालखण्डे विनाशं गच्छेयुः । 'वर्ल्ड् वाच् इन्स्टिट्यूट्'नामिका संस्था अभिप्रैति यत् एका भाषा विनष्टा चेत् संस्कृतेः कश्चन प्रकारः अपि विनष्टः भविष्यति इति ।





# योग्यम् उपायनम्

रञ्जितः पञ्चदशवर्षीयः । किन्तु परमालसः । क्रीडनं, भोजनं, निद्रा च तस्य प्रियं कार्यम् । यदि कश्चित् तं 'गर्तं कृत्वा सस्यानि आरोप्य जलं सिञ्चतु' इति सूचयति तर्हि रञ्जितः वदति स्म 'भूदेव्याः कष्टं भवति । तत् अहं द्रष्टुं न शक्नोमि' इति । 'जलसेचनं वा करोतु' इति सूच्यते चेत् सः वदति स्म - 'सस्यानां शीतबाधा भवेत्' इति । 'वृक्षम् आरुह्य फलानि चिनोतु' इति उक्तं चेत् 'मां दृष्ट्वा पक्षिणः भयेन उड्डीय गच्छेयुः । अतः तत् न करोमि' इति वदति स्म सः । प्रत्येककार्यात् अपि विमोचनं प्राप्तुं तस्य समीपे कश्चन उपायः वितर्कः वा सिद्धः भवति स्म एव ।

''सर्वदा गृहं स्वच्छम् एव भवति । अतः स्वच्छतायाः आवश्यकता एव न भवति'' इति वदन् सः स्वच्छताकार्यं निवारयति स्म । 'अहं सकृद्ग्राही अस्मि' इति वदन् पठनकार्यमपि निवारयति स्म सः । ''क्रीडया शरीरस्य व्यायामः भविष्यति'' इति वदन् सः क्रीडार्थम् अधिककालं यापयति स्म ।

रञ्जितस्य चतुरोक्त्या मातापितरौ सन्तुष्टौ भवतः स्म । अतः पुत्राय दायित्वं किमपि न यच्छतः स्म । पुत्रस्य चातुर्येण मनसि एव आनन्दम् अनुभवतः स्म । रञ्जितस्तु सर्वदा कुचेष्टायां मग्नः भवति स्म । गुरवः अपि तस्य बुद्धिमत्तायाः प्रशंसां कुर्वन्ति स्म ।

एकदा रञ्जितस्य मातुलः शङ्करः आगतवान् । रञ्जितस्य व्यवहारः तस्मै न अरोचत । सः अग्रजाम् अवदत् - ''एतस्य व्यवहारः यदि एवमेव अनुवर्तेत तर्हि एषः निष्प्रयोजकः भवेत् । यथाकथञ्चित् वा एतस्मिन् परिवर्तनम् आनेतव्यम्'' इति ।

तदा रञ्जितस्य माता - ''मम पुत्रः महा-

बुद्धिमान् अस्ति । सः अलसः अस्ति इति तु सत्यम् । भवान् यदि शक्नोति तर्हि तस्मिन् उत्तमपरिवर्तनम् आनेतुं प्रयत्नं करोतु'' इति अवदत् ।

शङ्करः निश्चितवान् यत् भागिनेये उत्तम-परिवर्तनम् आनेतव्यम् इति । सः रञ्जितम् अवदत् - ''वत्स, अस्मिन् वृक्षे बहूनि आम्रफलानि सन्ति । शतं फलानि अवचित्य यदि भवान् विक्रीणीते तर्हि सार्धैकशतं रूप्यकाणि प्राप्येरन् । तस्य अर्धभागं भवान् स्वीकृत्य अवशिष्टम् अर्धभागं मह्यं ददातु । वृक्षम् आरुह्य फलानि अवचिनोतु । अहं विपण्यां तेषां विक्रयणं करिष्यामि'' इति ।

तदा रञ्जितः हसन् अवदत् - ''एतावत् लघु कार्यं कर्तुं मया किमर्थं वृक्षस्य आरोहणं करणीयम् ? भवता वा किमर्थं तावद्दूरं विपणिं प्रति गन्तव्यम् ? सेवकं रामम् आह्वयाम । सः फलानि अवचित्य विक्रीय धनम् आनीय दास्यति'' इति ।

रञ्जितस्य वचनानि श्रुत्वा आश्चर्यचकितः शङ्करः - ''रे, भवान् तु महाबुद्धिमान् इति भाति । बुद्धिमता सता भवता कार्यकरणात् किमर्थं पलाय्यते ?'' इति पृष्टवान् ।

रञ्जितः स्वस्य समर्थनं कुर्वन् - ''माम ! अहं कार्यं न करोमि इत्यतः पिता वनपालकं नियुक्तवान् । अम्बा सेविकां नियुक्तवती । एवं तयोः जीवनाधारः लब्धः खलु । तयोः कार्यम् अहं यदि करिष्यामि तर्हि तयोः जीवनं कष्टकरं भवेत्'' इति अवदत् ।

तदा शङ्करः अवदत् - ''तर्हि भवान् कार्यं कृत्वा सम्पादितं धनं दानरूपेण तयोः कृते ददातु'' इति ।



''लज्जाहीनाः एव दानादिकं स्वीकुर्वन्ति । स्वाभिमानिनः स्वस्य परिश्रमस्य एव फलं प्राप्तुम् इच्छन्ति । अस्माभिः स्वाभिमानिनः एव पुरस्करणीयाः, न तु अलसाः'' इति अवदत् रञ्जितः ।

तदा शङ्करः ज्ञातवान् यत् एषः महाचतुरः अस्ति, वाचा एतस्य जयः कष्टकरः इति । तथापि शङ्करः हतोत्साहः न अभवत् । कथञ्चित् शङ्करद्वारा कार्यं कारणीयम् इति सः निश्चितवान् ।

शङ्करः आदिनं ग्रामे सर्वत्र अटनं कृत्वा कांश्चन विषयान् सङ्गृह्य रात्रौ भोजनं कुर्वन् रञ्जितस्य मातापितरौ अवदत् - ''गोविन्दस्य आपणे ये तण्डुलं क्रीणन्ति तेभ्यः सार्ध-द्विशतग्राम्परिमिताः पृथुकाः निःशुल्कं दीयन्ते । गोपालस्य आपणे शाटिकाद्वयं ये क्रीणन्ति तेभ्यः निःशुल्करूपेण वेष्टी दीयते । सोमस्य आपणे ये पाञ्चालिकाः क्रीणन्ति



तेभ्यः अन्या पाञ्चालिका विना मूल्यं दीयते । एवं भाति यत् भवद्ग्रामस्य वणिजः दानशीलाः इति'' इति ।

रञ्जितः एतत् सर्वं शृण्वन् आसीत् । सः अनुक्षणम् अवदत् - ''वस्तुतः विक्रयणं वर्धताम् इति उद्देशेन वणिजः एतादृशं तन्त्रम् आश्रयन्ति । ते जनान् आक्रष्टुम् एतादृशं जालं प्रसारयन्ति । एतत् दानं न । एवं दानेन ते एव लाभान्विताः भवन्ति । इतरवस्तूनि अधिकमूल्येन विक्रीय हानिं लाभरूपेण परिवर्तयन्ति ते । मम आशयः, गोविन्दस्य आपणे तण्डुलाः, गोपालस्य आपणे शाटिकाः, सोमस्य आपणे पाञ्चालिकाः च न्यूनमूल्येन लभ्यन्ते । अन्यवस्तूनां मूल्यम् अधिकं भवति । अतः बुद्धिमद्भिः तेषु आपणेषु तानि एव वस्तूनि क्रेतव्यानि, येषां मूल्यम् उचितम् अस्ति'' इति ।

''भवतु । भवान् बुद्धिमान् इति अङ्गीकरोमि । भवान् एव श्वः तत्र गत्वा तण्डुलं, शाटिकाः, पाञ्चालिकाः च आनयतु'' इति उक्तवान् शङ्करः ।

'अस्तु' इति उत्साहेन उक्तवान् रञ्जितः । शङ्करस्य तन्त्रं रञ्जितः न अवगतवान् आसीत् । अतः एव उत्साहवशात् 'अस्तु' इति अङ्गीकृतवान् आसीत् सः ।

प्रातःकालः अभवत् । सर्वे उत्थितवन्तः । किन्तु रञ्जितः इतोऽपि सुप्तवान् आसीत् । तस्य माता तं बलात् उत्थापितवती । तदा सः कारणानि वक्तुम् आरब्धवान् 'शिरोवेदना', 'उदरवेदना', 'श्रान्तिः' इति । तदा तस्य माता भीत्या वैद्यम् आहूतवती । वैद्यः गुलिकाः दत्त्वा गतवान् । तथापि रञ्जितः मञ्चे शयानः एवं मन्दस्वरेण क्रन्दनम् आरब्धवान् । माता-पितृभ्यां बहु अनुरोधः कृतः चेदपि जलमपि न पीतवान् सः ।

शङ्करः ज्ञातवान् यत् आपणे निःशुल्क दानाय एतत् अन्तिमं दिनम् इति । अतः सः स्वयं तत्र गतवान् । यदा शङ्करः गृहात् बहिः निर्गतवान् तदा रञ्जितः उत्थाय उपविष्टवान्, सम्यक् भोजनं कृत्वा क्रीडितुं गतवान् च ।

वस्तूनि क्रीत्वा प्रत्यागच्छन् शङ्करः क्रीडन्तं रञ्जितं दृष्टवान् । सः स्वप्नेऽपि न ऊहितवान् आसीत् यत् भागिनेयः मां वञ्चयेत् इति ।

रञ्जितः अपि शङ्करं दृष्टवान् । सः मातुलस्य दृष्टिक्षेपात् आत्मानं रक्षितुम् इच्छति स्म । अतः सः आत्मानं गोपयितुम् उद्युक्तः सन् स्खलनं प्राप्य पतितवान् । शिलया घट्टितः भूत्वा क्षतग्रस्तः अभवत् च ।

भागिनेयस्य साहाय्यं कर्तुं शङ्करः अग्रे हस्तं प्रसारितवान् । तत् तिरस्कृत्य स्वयमेव उत्थातुं

प्रयतमानः रञ्जितः पुनश्च पतितवान् । तदा तस्य पञ्चानाम् अङ्गुलीनाम् अपि क्षताः अभवन् । तदा शङ्करः पूर्णप्रयासेन रञ्जितम् उन्नीतवान् । अनन्तरं तम् उद्दिश्य - "अनारोग्यस्य व्याजम् उक्त्वा मां बहिः प्रेषितवान् भवान् मम पुरतः एव क्रीडन् आसीत् । उद्धतः भवान् । माम् एव वञ्चयितुं प्रयत्नं कृतवान् खलु भवान् !" इति खेदपूर्णस्वरेण उक्तवान् ।

तदा रञ्जितः - "भवतः आत्मानं गोपयितुं प्रयतमानः अहं पतितवान् । अतः एव क्षतग्रस्तः अभवम् । एतेन 'अहं भवतः विषये महादरवान् अस्मि' इति प्रमाणितम् अभवत् खलु ?" इति अवदत् ।

रञ्जितस्य क्षतं दृष्ट्वा शङ्करस्य नेत्राभ्याम् अश्रूणि आगतानि । सः तम् उद्दिश्य - "जातं तु जातम् । यदा अहं साहाय्यार्थं हस्तं प्रसारितवान् तदा भवान् मम हस्तं ग्रहीतुम् अशक्ष्यत् खलु । वृथा भवतः अङ्गुलीनां हानिः अभवत् । पुनश्च क्षतः अपि अभवत् भवतः" इति अवदत् ।

रञ्जितः हसन् अवदत् - "तथा किमपि नास्ति । एषः क्षतः अपरेण क्षतेन सह निःशुल्कं प्राप्तः अस्ति" इति ।

भागिनेयस्य वचनं श्रुत्वा शङ्करः हासम् अवरोद्धुं न शक्तवान् । सः भागिनेयस्य उत्साहं वर्धयन् प्रशंसां कृतवान् । तेन सह गृहं गत्वा सर्वेषां पुरतः - "वाक्चातुर्यविषये रञ्जितः असदृशः एव । एतस्मिन् लोकज्ञानं महत् अस्ति । कष्टकाले अपि स्वयं हसन् इतरान् हासयितुम् अपि शक्नोति एषः । अतः भूदेव्या अपि एकक्षतेन सह अन्यक्षतः निःशुल्कं दत्तः अस्ति" इति उक्तवान् ।

तद्दिनतः रञ्जिते उत्तमपरिवर्तनं दृष्टम् । सः गृहकृत्यानां स्वयं निर्वहणम् आरब्धवान् । तथैव इतरैः उक्तानि कार्याणि अपि श्रद्धया करोति स्म सः ।

"कार्यकरणे बुद्धिमत्तां यः प्रदर्शयति सः एव बुद्धिमान् । अद्य अस्माकं रञ्जितः कार्ये आसक्तिं दर्शयन् वास्तविकतया बुद्धिमान् जातः अस्ति" इति वदन्तौ रञ्जितस्य मातापितरौ सन्तुष्टौ जातौ ।



# भारतम् अवगम्यताम्

## प्रश्नोत्तरम्

सप्टम्बर्मासस्य पञ्चमः दिनाङ्कः डा॰ एस्. राधाकृष्णवर्यस्य जन्मदिनम् । सः प्रसिद्धः तत्त्वज्ञानी, शिक्षणतज्ञः च आसीत् । भारतस्य द्वितीयराष्ट्रपतित्वेन दायित्वं निरूढवतः तस्य जन्मदिनं शिक्षकदिनत्वेन आचर्यते प्रतिवर्षम् । अतः एतस्य मासस्य प्रश्नाः शिक्षणक्षेत्रम् अवलम्ब्य भवन्ति -

१. भारतस्य कः प्रदेशः प्राचीने काले शिक्षणकेन्द्रत्वेन ख्यातः आसीत् ?
२. कः विश्वभारतीविश्वविद्यालयम् आरब्धवान् ? तच्च कदा ?
३. चेन्नैनगरे स्थितस्य प्रसिद्धस्य नृत्यसङ्गीतकलाकेन्द्रस्य नाम किम् ? तच्च कदा आरब्धम् ?
४. संसदा नूतना शिक्षणनीतिः कदा अङ्गीकृता ?
५. भारतीयोच्चाध्ययनसंस्था (इण्डियन् इन्स्टिट्यूट् आफ् अड्वान्सड् स्टडीस्) कुत्र अस्ति ?
६. बनारसहिन्दुविश्वविद्यालयं कः संस्थापितवान् ?
७. भूतपूर्वः राष्ट्रपतिः डा॰ झाकीरहुसेनवर्यः केन विश्वविद्यालयेन सम्बद्धः आसीत् ?
८. महात्मगान्धिवर्येण या अपूर्वा शिक्षणपद्धतिः आरब्धा तस्याः नाम किम् ?
९. नेहरूमन्त्रिमण्डलस्य प्रथमः शिक्षासचिवः कः आसीत् ?
१०. कलकत्तीयः, मद्रासीयः, बोम्बेनगरीयः च विश्वविद्यालयाः अभिन्ने एव वर्षे आरब्धाः । तच्च कदा ?
११. आंग्लभाषा शिक्षामाध्यमत्वेन कदा अङ्गीकृता ?
१२. भारतस्य कः शिक्षणतज्ञः युनेस्कोसंस्थायाः 'डेप्युटि डैरेक्टर् जनरल्'पदम् अलङ्कृतवान् आसीत् ?
१३. कौरवपाण्डवान् कः धनुर्विद्यां बोधितवान् ?
१४. केरलराज्ये स्थितस्य नृत्यप्रशिक्षणकेन्द्रस्य नाम किम् ?
१५. सः प्राचीनः विश्वविद्यालयः कः, यस्य च वैद्यकीयविद्यालयः आसीत् ?

*(उत्तराणि अग्रिमे मासे)*

### 'अगस्ट्'प्रश्नावल्याः उत्तराणि

१. 'दि थर्ड् नेटिव् कावल्री' दलीयाः ।
२. ए. ओ. होम्नामकेन आंग्लेयेन ।
३. डब्ल्यु. सि. ब्यानर्जी, मुम्बयीनगरे, १८८५ तमे वर्षे ।
४. लाला हरदयालः ।
५. १९२२ तमे वर्षे फेब्रवरीमासस्य पञ्चमे दिनाङ्के । तच्च अस्ति गोरखपुरजनपदे ।
६. १९१९ तमवर्षस्य एप्रिल्मासस्य १३ दिनाङ्के ।
७. लोकमान्यः बालगङ्गाधरतिलकः ।
८. १९१५ तमे वर्षे ।
९. जतिनमुखर्जी ।
१०. सर् तेगबहादुरसप्रु, एम्. आर्. जयकर् च ।
११. भगतसिंहेन ।
१२. सिङ्गपुरे १९४३ तमे वर्षे ।

६६. स्वर्गारोहणम्

# महाभारतम्

युधिष्ठिरः सर्वेषाम् ऋषीणां निमित्तं भोजनकार्यक्रमम् आयोजितवान् । कृष्ण-द्वारा सर्वेभ्यः दानं दापितवान् । परीक्षितं शिष्य-रूपेण कृपाचार्यसमीपं प्रेषितवान् । सर्वान् मन्त्रिणः आहूय - 'अहम् अचिरात् महा-प्रस्थानं करिष्यामि' इति उक्तवान् । मन्त्रिणः आक्षेपं कृतवन्तः । किन्तु विविधैः उदाहरणैः तान् युधिष्ठिरः समाश्वासितवान् ।

तदनन्तरं पञ्च पाण्डवाः द्रौपदी च सर्वाणि आभरणानि अपनीय वल्कलं धृतवन्तः । सर्वान् अग्नीन् जले विसृज्य ते प्रस्थिताः । एतत् दृष्ट्वा नगरजनाः तां घटनां स्मृतवन्तः, या च द्यूतक्रीडायां पराजितानां पाण्डवानां वनवासप्रस्थानसमये आसीत् । तदा सर्वाः स्त्रियः रोदनं कुर्वत्यः आसन् । किन्तु पाण्डवाः किञ्चिदपि चिन्तायुक्ताः न आसन् ।

यदा पाण्डवाः नगरसीमां क्रान्त्वा गच्छन्तः आसन् तदा कश्चित् शुनकः महाप्रस्थानार्थं सप्तप्राणिभिः सह तान् अनुसृतवान् । पाण्डवानाम् उद्देशे परिवर्तनम् आनेतुं केचन नगरवासिनः तान् अनुसृतवन्तः । किन्तु अन्ते अनन्यगतिकतया तैः प्रत्यागन्तव्यम् अभवत् । यदा पाण्डवाः द्रौपद्या सह गतवन्तः तदा उलूपी गङ्गानदीं प्रविष्टवती । चित्राङ्गदा





मणिपुरं गतवती । पाण्डवानाम् इतरपत्न्यः परीक्षित्समीपे एव स्थितवत्यः ।

प्रारम्भे पाण्डवाः पूर्वदिशायां युधिष्ठिरम् अनुसरन्तः गतवन्तः । ते अनेकान् देशान् अनेकाः नदीः च क्रान्तवन्तः । केषाञ्चित् दिनानाम् अनन्तरं ते ताहित्यनामकस्य समुद्रस्य तीरं प्राप्तवन्तः । तावत्पर्यन्तम् अपि अर्जुनः गाण्डीवम् अक्षयतूणीरं च स्वस्य समीपे एव स्थापितवान् आसीत् ।

मार्गे अग्निदेवः पर्वताकारकं शरीरं धृत्वा प्रत्यक्षः अभवत् । सः तान् उद्दिश्य - ''अहम् अस्मि अग्निदेवः । इदानीम् अर्जुनाय गण्डीवं न आवश्यकम् । तेन तस्य त्यागः करणीयः । तत् गाण्डीवं वरुणस्य अस्त्रम् इत्यतः तस्मै तत् प्रत्यर्पणीयम्'' इति आदिशत् । अन्येऽपि अर्जुनं बोधितवन्तः । तदा अर्जुनः तूणीरं गाण्डीवं च समुद्रे क्षिप्तवान् । ततः अग्निदेवः अपि अदृश्यः अभवत् ।

पाण्डवाः दक्षिणदिशं प्रति प्रस्थिताः । ततः समुद्रतीरमार्गेण पश्चिमदिशि गतवन्तः । तत्र ते समुद्रे निमज्जन्तीं द्वारकानगरीं दृष्टवन्तः । ततः ते उत्तरदिशि गताः । हिमालयम् अतिक्रम्य गताः ते मेरुपर्वतं दृष्टवन्तः ।

पाण्डवाः इतोऽपि चलन्तः आसन् । तावता मार्गे द्रौपदी मृता भूत्वा अपतत् । युधिष्ठिरः अग्रे गच्छन् आसीत् । भीमः युधिष्ठिराय द्रौपद्याः मरणवार्तां श्रावितवान् । किन्तु युधिष्ठिरः न दृष्टवान् एव । तथैव अग्रे अगच्छत् । किञ्चित्कालानन्तरं सहदेवः पतितः । एवमेव क्रमशः नकुलार्जुनयोः मरणवार्तां भीमः श्रावितवान् । अनन्तरं भीमः 'अहम् अपि म्रियमाणः अस्मि' इति युधिष्ठिरम् उक्त्वा पतितवान् । युधिष्ठिरः अविचलचित्तः एव अतिष्ठत् । पृष्ठतः न दृष्टवान् एव । इदानीमपि शुनकः युधिष्ठिरम् अनुसरन् आसीत् ।

किञ्चित्कालानन्तरम् इन्द्रः रथेन सघोषं तत्र प्राप्तवान् । सः युधिष्ठिरं निवेदितवान् यत् 'रथारोहणं करोतु' इति । तदा युधिष्ठिरः इन्द्रम् उद्दिश्य - ''मम सर्वेऽपि सोदराः मृताः अभवन् । तैः अपि मया सह आगन्तव्यम् । द्रौपदी अपि अस्माभिः सह भवेत् । मम एषः नियमः यदि भवता अङ्गीक्रियते तर्हि एव रथारोहणं करोमि अहम् । तान् विना अहं स्वर्गं गन्तुं न इच्छामि'' इति अवदत् ।

उत्तररूपेण इन्द्रः अवदत् - ''ते सर्वेऽपि पूर्वमेव शरीरं परित्यज्य स्वर्गं प्राप्तवन्तः सन्ति । किन्तु भवान् सशरीरः एव स्वर्गं



प्राप्स्यति । अतः मया सह आगच्छतु'' इति ।

तदा युधिष्ठिरः – ''एषः शुनकः विश्वास-पूर्वकं मया सह एतावद्दूरम् आगतवान् अस्ति । अतः मया सह एषः अपि नेतव्यः भवेत् । एतं शुनकम् एकाकिनं त्यक्त्वा अहं स्वर्गं गन्तुं सर्वथा न इच्छामि'' इति दृढस्वरेण उक्तवान् ।

इन्द्रः अवदत् – ''भवान् मत्समानः भूत्वा स्वर्गम् आगच्छन् अस्ति । अत्र शुनकस्य किं प्रयोजनम् ? शुनकम् अत्र एव त्यजतु'' इति । किन्तु युधिष्ठिरः एतत् न अङ्गीकृतवान् । इन्द्रः युधिष्ठिरं बोधितवान् – 'शुनकानां स्वर्गे स्थानं नास्ति' इति । तथापि युधिष्ठिरः स्वस्य अभिप्रायं न त्यक्तवान् ।

तदा शुनकरूपेण स्थितः यमराजः युधिष्ठिरस्य पुरतः प्रत्यक्षः भूत्वा – ''वन-वासकाले यक्षरूपेण भवतः परीक्षां कृतवान् अहम् । इदानीं पुनः शुनकरूपेण भवन्तं परीक्षितवान् । भवत्समानः पुरुषः स्वर्गे अपि नास्ति । भवान् सशरीरः सन् उत्तमलोकं प्राप्स्यति'' इति अवदत् ।

तदनन्तरम् इन्द्रः, यमराजः, अश्विनी-देवताः च युधिष्ठिरं रथे उपवेशितवन्तः । सर्वेऽपि स्वविमानेन प्रस्थिताः ।

नारदः अवदत् – ''अनेके राजर्षयः उत्तमलोकम् आगताः । किन्तु तेषु कोऽपि सशरीरं स्वर्गम् आगतवतः युधिष्ठिरस्य समानः भवितुम् अर्हति'' इति ।

तदा युधिष्ठिरः अवदत् – ''सुखं दुःखं वा अहं सहोदरैः सहैव अनुभोक्तुम् इच्छामि'' इति ।

एतत् श्रुत्वा इन्द्रः अवदत् – ''राजन्, उत्तमलोकं प्रति आगतवान् अपि भवान् मानवसम्बन्धान् किमर्थं न त्यजति ? अहं वास्तविकतां वदन् अस्मि, शृणोतु । भवतः सहोदराः उत्तमलोकं प्राप्तुम् अर्हाः न । अतः



परित्यक्तव्यम् । दुर्योधनः वीरमृत्युं प्राप्य स्वर्गम् आगतवान् अस्ति'' इति उक्तवान् ।

तदा युधिष्ठिरः - ''सर्वविधानि पापानि आचरितवतः दुर्योधनस्य यदि स्वर्गप्राप्तिः भवति तर्हि सदा पुण्यकार्ये निरतैः मम सहोदरैः कीदृशः लोकः प्राप्तः स्यात् ? धृष्टद्युम्नः, अभिमन्युः, उपपाण्डवाः च कुत्र सन्ति ? अहं शीघ्रं तान् द्रष्टुम् इच्छामि'' इति नारदम् अवदत् ।

कर्णः अपि तत्र न आसीत् । युधिष्ठिराय युद्धे साहाय्यं कृतवन्तः अनेके राजानः तत्र न आसन् । अतः युधिष्ठिरस्य मुखे असमाधानं दृश्यते स्म । तत् दृष्ट्वा देवाः अवदन् - ''तर्हि तेषां समीपम् एव गच्छाम, आगच्छतु । यतः, युधिष्ठिरस्य इच्छा पूरणीया इति इन्द्रस्य आदेशः अस्ति'' इति ।

ततः देवाः एकं दूतम् आहूय - ''युधिष्ठिरः यान् द्रष्टुम् इच्छति तेषां समीपं तं नयतु'' इति आदिष्टवन्तः । दूतः युधिष्ठिरं स्वीकृत्य शेष-पाण्डवानां दर्शनार्थं प्रस्थितवान् ।

तौ येन मार्गेण गच्छतः स्म तस्मिन् मार्गे पापिनः आसन् । मार्गः अपि चलनयोग्यः न आसीत् । मार्गे सर्वत्र रक्तमांसादयः विकीर्णाः आसन् । तेषाम् उपरि मक्षिकाः, मशकाः च डयमानाः आसन् । सर्वत्र केशाः, अस्थीनि, कीटाः, अग्निज्वालाः च दृश्यन्ते स्म । युधिष्ठिरः अग्रे गच्छन्तं देवदूतम् उद्दिश्य - ''इतोऽपि कियत् अग्रे गन्तव्यं भवेत् ?'' इति पृष्टवान् ।

तदा देवदूतः - ''भवान् श्रान्तः इति भाति । प्रतिगच्छाव तावत् । अग्रे मार्गः

अलं तेषां विषये चिन्तया । स्वर्गं, देवताः, देवर्षीन् च पश्यतु तावत्'' इति ।

तदा युधिष्ठिरः - ''अहं सहोदरान् विहाय स्थातुं न शक्नोमि । मम सहोदराः, द्रौपदी, अस्माकं पुत्राः च यत्र सन्ति तत्रैव गन्तुम् इच्छामि'' इति दृढस्वरेण उक्तवान् ।

स्वर्गम् प्रति गमनानन्तरं देवानां मध्ये उपविष्टं दुर्योधनं दृष्टवान् युधिष्ठिरः । सः अत्यन्तं प्रकाशमानः दृश्यते स्म । तत् दृष्ट्वा युधिष्ठिरस्य मनसि ईर्ष्याभावः उत्पन्नः । 'कथम् एषः पापी स्वर्गे स्थानं प्राप्तवान्' इति आश्चर्यम् अनुभूतवान् युधिष्ठिरः । सः तिरस्कारपूर्वकं मुखं परिवर्त्य अवदत् - ''यत्र लोभी दुर्योधनः अस्ति तादृशं स्वर्गं सर्वथा न इच्छामि'' इति ।

तदा नारदः मन्दहासपूर्वकं - ''राजन्, स्वर्गं प्रति आगमनानन्तरं पूर्वतनवैमनस्यं



अपि नास्ति'' इति । युधिष्ठिरः निराशः अभवत् । दुर्गन्धः आसीत् इत्यतः तस्य शिरोभ्रमणं भवत् आसीत् ।

तावता कतिचन दीनस्वराः तेन श्रुताः - ''युधिष्ठिर ! भवतः आगमनेन वा वयं किञ्चित् वा हितम् अनुभवन्तः स्मः । भवान् इतोऽपि किञ्चित्कालम् अत्रैव तिष्ठतु'' इति ।

युधिष्ठिरः तान् कण्ठान् उद्दिश्य अपृच्छत् - ''के भवन्तः ? किमर्थम् अत्र सन्ति ?'' इति ।

ततः प्रत्युत्तरम् आगतम् - 'अहं कर्णः' 'अहं भीमः', 'अहम् अर्जुनः', 'अहं नकुलः', 'अहं सहदेवः', 'अहं द्रौपदी' इत्यादिरूपेण ।

तेषाम् उत्तरं श्रुत्वा युधिष्ठिरः दुःखितः अभवत् । ''पुण्यशालिनः एते कीदृशं पापम् आचरितवन्तः स्युः ! स्वर्गं प्राप्य सुखम् अनुभवता दुर्योधनेन कीदृशं पुण्यं कृतं स्यात् ? एतत् सर्वं किम् ? किम् अहं निद्रितः अस्मि, उत जागरितः इत्येव न ज्ञायते । अथवा अहम् उन्मत्तः अभवम् इति भाति'' इति वदन् युधिष्ठिरः देवानां धर्मस्य च विषये क्रुद्धः अभवत् । देवदूतम् उद्दिश्य सः - ''भवान् यस्य दूतः अस्ति तस्य समीपं गच्छतु । तं वदतु यत् युधिष्ठिरः सहोदरान् त्यक्त्वा आगन्तुं न इच्छति इति । मम उपस्थित्या ते किञ्चित् वा हितम् अनुभवेयुः'' इति अवदत् । देवदूतः इन्द्रस्य समीपं गत्वा प्रवृत्तं सर्वं निवेदितवान् ।

युधिष्ठिरः क्षणद्वयं तत्र स्थितवान् । तावता इन्द्रादयः देवाः तत्र आगताः । तेषाम् आगमनसमनन्तरं सर्वाः ध्वनयः स्थगिताः

अभवन् । वैतरणीनदी अपि अदृश्या जाता । सुखप्रदवायोः सञ्चारः आरब्धः । सर्वत्र सुगन्धः प्रसृतः । नूतनं वायुमण्डलम् उत्पन्नम् ।

इन्द्रः युधिष्ठिरम् अवदत् – ''युधिष्ठिर ! देवाः भवतः व्यवहारेण प्रसन्नाः सन्ति । इदानीं भवान् अस्माभिः सह आगच्छतु । भवता सिद्धिः प्राप्ता अस्ति । भवान् भवतः सहोदराः च उत्तमलोकमेव प्राप्स्यन्ति । खिन्नः मा भवतु । प्रत्येकराजेन अपि सकृत् नरकदर्शनं करणीयं भवति । सर्वेऽपि पापानि पुण्यानि च कुर्वन्ति । यः आरम्भे पापफलानि अनुभवति सः अनन्तरं पुण्यफलानि अनुभवति । येन आरम्भे पुण्यफलानि अनुभूयन्ते तेन अनन्तरं पापफलानि अनुभोक्तव्यानि एव । यस्य पापानि न्यूनानि तेन प्रथमं नरकम् अनुभूयते । अतः अहं भवन्तम् आरम्भे नरकं प्रति नीतवान् । भवतः सहोदराः द्रौपदी च किञ्चित् पापं कृतवन्तः आसन् इत्यतः तैः नरकभोगः कृतः । इदानीं ते पापमुक्ताः सन्ति । इतःपरं भवतः प्रियजनाः सर्वे स्वर्गे भविष्यन्ति । भवान् कर्णविषये चिन्तयन् आसीत् । सः अपि स्वर्गं प्राप्तवान् अस्ति । भवान् इतरेषां राज्ञाम् अपेक्षया अधिकं पुण्यं कृतवान् अस्ति । हरिश्चन्द्रेण, मान्धात्रा, भगीरथेन, दुष्यन्तेन च यत् स्थानं प्राप्तं तादृशमेव स्थानं भवान् प्राप्स्यति । पश्यतु, एषा आकाशगङ्गा । अत्र भवान् यदि स्नानं करोति तर्हि सर्वमानवीयभावाः अपगच्छन्ति । अतः भवान् अत्र स्नानं करोतु'' इति ।

युधिष्ठिरः आकाशगङ्गायां स्वशरीरस्य त्यागं कृत्वा साक्षात् सहोदराणां समीपं गतवान् । तत्र कृष्णः अपि आसीत् । कृष्णः तदा अपि परिचययोग्यं रूपम् एव धृतवान् आसीत् । अर्जुनः कृष्णेन सह आसीत् । युधिष्ठिरस्य दर्शनानुक्षणं कृष्णार्जुनौ आदरपूर्वकं तस्य समीपम् आगतवन्तौ ।

अपरत्र सूर्यः इव प्रकाशमानः कर्णः दृष्टः । भीमः मरुद्गणैः सः दृष्टः । नकुलसहदेवौ अश्विनीदेवताभ्यां सह आस्ताम् ।

अनन्तरम् इन्द्रः युधिष्ठिराय द्रौपदीं, तस्याः पुत्रान्, अभिमन्युं, धृतराष्ट्रं, पाण्डुराजं, कुन्तीं, माद्रीं, भीष्मं, द्रोणम्, इतरवीरान् च दर्शयित्वा तेषां विषये विवरणम् उक्तवान् ।



चन्दमामाप्रस्तुतिः

6

# अजेयः गरुडः

कला - पाणिः

चन्द्रपुर्याः मुख्यमन्त्रिणः पुत्रः आदित्यः जनान् पीडयतः लुण्ठाकान् बन्दिनः कृतवान् । किन्तु राज्ञः महेन्द्रदेवस्य कथनानुसारं सेनापतिना राजपुत्रस्य मोचनार्थं ते लुण्ठाकाः विमुक्ताः । तेषु लुण्ठाकेषु अन्यतमः रामसिंहः आदित्याय 'कथं सेनापतिः तस्य पितरं मारितवान्' इति विषयं विज्ञापितवान् । आदित्यः लुण्ठाकेभ्यः 'सेनापतेः विरोधरूपेण प्रचलिष्यमाणे आन्दोलने साहाय्यं करोमि' इति आश्वासनं दत्तवान् । सेनापतेः पुत्रः जागरितः । महेन्द्रदेवः गरुडं ग्रहीतुं जनान् प्रेषितवान् ।

सेनापतिः अष्टमुख्यसेनानायकेभ्यः एकैकस्य क्षेत्रस्य दायित्वं दत्वा प्रेषितवान् ।

ते अष्टसु दिक्षु गतवन्तः ।

गरुडः झटिति आगत्य तेषाम् उपरि आक्रमणम् अकरोत् । गरुडस्य अष्ट अनुचराः अपि गरुडवत् वेषं धृत्वा आक्रमणं कृतवन्तः आसन् ।


राज्यसभायां नरेन्द्रदेवः 'अस्माकं सैनिकाः सफलाः अभवन्'
इति असत्यघोषणं कृतवान् ।


सेनापतिवर्य ! किं ते गरुडं बद्धवन्तः ? कुत्र अस्ति सः ?


अहं भवते अधिकं विवरणं वक्तुं न शक्नोमि । भवान् शीघ्रमेव गरुडस्य रक्तसिक्तदेहं द्रक्ष्यति ।


तद्दिने रात्रौ सेनापतिः गरुडं स्वस्य शयन-
प्रकोष्ठे दृष्टवान् । भीतः सः अङ्गरक्षकाणां
निमित्तं करताडनं कृतवान् ।


सेनापतिवर्य, तस्य आवश्यकता नास्ति । यतः ते एकं पदम् अपि अग्रे स्थापयितुं न अर्हन्ति ।


यदि भवान् वीरः तर्हि मया सह युद्ध्यताम् । आगच्छतु । स्पर्धा भवतु ।


नरेन्द्रदेवः युद्धं कृतवान् । गरुडः तस्य उपरि आघातान् कुर्वन् आसीत् ।


गरुडः अत्र तत्र सर्वत्र च दृश्यते स्म ।
अचिरात् नरेन्द्रदेवः मूर्च्छां गतः ।


तावता ज्ञातं यत् गरुडः नौकायाम् अस्ति इति । तदा अष्ट अधिकारिणः अपि नौकायाः दिशि धावितवन्तः ।


यदा अधिकारिणः तत्र गत्वा दृष्टवन्तः तदा गरुडः तत्र शयानः आसीत् ।


गरुडः मूर्च्छावस्थायाम् अस्ति इति विचिन्त्य ते सन्तुष्टाः ।


'गरुडस्य दण्डनदायित्वं सेनापतिः एव निर्वहतु' इति तेषु एकः उक्तवान् । अन्ये एतत् अङ्गीकृतवन्तः ।


आगच्छन्तु । तं निगडेन बद्ध्वा सभां प्रति नयाम ।
-(अनुवर्तते)



# निष्कृष्टं भविष्यम्

सन्दीपः निरञ्जनपुरस्य निवासी । सः साधारणे कृषिककुले जातः । एकरद्वयपरिमिता भूमिः आसीत् तस्य । स्वयं कृषिं कुर्वन् सः पत्नी-पुत्राभ्यां सह सुखेन दिनानि यापयति स्म ।

तस्मिन् एव ग्रामे पशुपतिनामकः कश्चन धनाढ्यः निवसति स्म । येषाम् आवश्यकता भवति तादृशेभ्यः अधिकां वृद्धिं स्वीकृत्य ऋणं ददाति स्म सः । अनन्तरं केनचित् व्याजेन ऋणस्वीकर्तॄणां सम्पत्तिं स्वायत्तीकरोति स्म ।

सन्दीपस्य पिता पशुपतिद्वारा कदाचित् ऋणं स्वीकृतवान् । स्वस्य जीवितकाले सः तत् ऋणं प्रत्यर्पयितुं न शक्तः । सन्दीपः अपि पित्रा कृतम् ऋणं प्रत्यर्पयितुम् अशक्तः अभवत् । अतः सन्दीपेन फलचयस्य कश्चन भागः वृद्धिरूपेण प्रतिवर्षं पशुपतये दातव्यः भवति स्म ।

आवर्षं कठिनं श्रमं कृत्वा वर्धितं धान्यं नेतुं फलसङ्ग्रहस्य कालः यदा आगच्छति तदा पशुपतेः जनाः उपस्थिताः भवन्ति स्म । अनन्यगतिकः सन्दीपः किमपि कर्तुं न शक्नोति स्म । क्रोधम् आक्रोशं च मनसि एव स्थापयित्वा धान्यं ददाति स्म सः ।

एकदा पशुपतेः केचन पशवः सन्दीपस्य क्षेत्रं प्रविष्टवन्तः, सस्यानि नाशितवन्तः च । सन्दीपः चिन्तितवान् यत् पशुपतेः धेनवः मम सस्यानि नाशितवत्यः इत्यतः अस्मिन् वर्षे पशुपतिः मत्तः वृद्धिं न स्वीकुर्यात् इति । किन्तु धान्यसङ्ग्रहकाले पशुपतेः जनाः यथापूर्वं समुपस्थिताः एव । 'धान्यं ददातु' इति ते सानुरोधम् उक्तवन्तः ।

तदा सन्दीपः तान् अवदत् – ''महोदयाः ! भवन्तः जानन्ति एव यत् पशुपतिवर्यस्य धेनवः एव मम क्षेत्रस्य सस्यानि नाशितवत्यः इति । यत् अवशिष्टम् अस्ति तेन एव मया मम कुटुम्बस्य पोषणं करणीयम् । अतः अस्य वर्षस्य वृद्धिः मा स्वीक्रियताम् । आगामिवर्षतः

अहं यथापूर्वं धान्यं दास्यामि'' इति ।

स्वस्य सेवकानां द्वारा एतं विषयं श्रुत्वा स्वयं पशुपतिः तत्र आगतवान् । 'धान्यम् इदानीम् एव दातव्यम्' इति सः अनुरोधपूर्वकम् उक्तवान् । सन्दीपः, तस्य पत्नी, पुत्रः च बहुधा विज्ञापितवन्तः । तथापि पशुपतिः न अङ्गीकृतवान् ।

पशुपतेः व्यवहारेण सन्दीपस्य सहनाशक्तिः नष्टा । सः क्रोधेन अवदत् – ''मम एतस्याः दीनावस्थायाः कारणं भवतः पशवः एव । यदि ते मम सस्यानां नाशं न अकरिष्यन् तर्हि भवते धान्यं दत्त्वा वृद्धिं प्रत्यर्पयिष्यम् । मम दुःस्थितेः कारणं भवान् एव । भवति मानवीयतायाः लेशः अपि नास्ति । पशोः भवतः च कोऽपि भेदः न दृश्यते'' इति ।

सन्दीपस्य कटुवचनैः पशुपतिः क्षणं यावत् अवाक् अभवत् । यतः पशुपतिना सर्वथा न ऊहितम् आसीत् यत् सन्दीपः एवम् उद्विग्नः भवेत् इति, कटुभाषायाः प्रयोगं कुर्यात् इति च । अतः तस्य नेत्रे क्रोधेन रक्ते जाते । आत्मानं नियन्त्रयितुम् अशक्नुवन् सः सेवकान् सूचितवान् यत् सन्दीपं वृक्षे बध्नन्तु इति । अनन्तरं सः स्वयं कशया सन्दीपस्य ताडनम् आरब्धवान् । पशुपतिम् अवरोद्धुम् आगतैः सन्दीपस्य पत्नीपुत्रादिभिः ताडनं प्राप्तम् । तत्र सम्मिलितेषु कोऽपि पशुपतेः अवरोधनसाहसं न कृतवान् । यतः तेषु कोऽपि तादृशः न आसीत्, यश्च पशुपतितः ऋणं स्वीकृतवान् न स्यात् । प्रहारं कृत्वा श्रान्तः पशुपतिः कशां दूरे क्षिपन् अवदत् – ''रे सन्दीप, भवतः क्षेत्रं गृहं च स्वायत्तीकरिष्यामि चेदपि ऋणस्य अर्धभागः एव प्रतिप्राप्तः भवेत् । अवशिष्टम् अर्धभागं भवान् कथं प्रत्यर्पयिष्यति इति अहं न जाने । तत् तु भवता प्रत्यर्पणीयम् एव । श्वः प्रातःकालात् पूर्वं भवता तत् प्रत्यर्पणीयम्'' इति ।

तदनन्तरं यदा सः ततः प्रस्थातुम् उद्युक्तः तदा सन्दीपः उच्चस्वरेण – ''रे तिष्ठ'' इति अवदत् ।





पशुपतिः तत्रैव स्थितवान् । सः आश्चर्यचकितः अभवत् । सन्दीपः साञ्जलिः शिरः उन्नमय्य आकाशं पश्यन् - ''यदा विनाशकालः सन्निहितः भवति तदा मनुष्यः विपरीतबुद्धिमान् भवति इति श्रुतवान् अस्मि । भवतः नाशस्य दिनानि सन्निहितानि सन्ति इति भाति । अतः एव दुराचारं कुर्वन् अस्ति भवान् । आत्मानं सर्वाधिकारिणं भावयन् अस्ति भवान् । अहं निष्कपटः, सत्यवादी, धर्मपरायणः च अस्मि । श्वः सूर्योदयात् पूर्वं भवतः सर्वनाशः भविष्यति । मध्याह्ने प्रकाशमानस्य सूर्यस्य नाम्ना शपे अहम्'' इति अवदत् ।

पशुपतिः सन्दीपस्य उपहासं कुर्वन् ततः निर्गतवान् । तद्दिने रात्रौ अकस्मात् महती वृष्टिः अभवत् । विद्युत्सञ्चारेण आकाशे भीकरः स्वरः श्रूयते स्म । आकाशः अधः पतति वा इति भासते स्म । पशुपतेः गृहस्योपरि विद्युत् पतिता । तस्य गृहं धराशायि अभवत् । तत्र वसत्सु कोऽपि न जीवितः ।

तस्मिन् एव समये नारदमहर्षिः भूलोकयात्रां समाप्य सत्यलोकं प्रति गच्छन् आसीत् । सन्दीपस्य शापवचनानि तेन श्रुतानि आसन् । तद्दिने रात्रौ प्रवृत्तं सर्वं दृष्टम् अपि आसीत् तेन । एताः घटनाः नारदस्य अवधानम् आकर्षन् । 'सामान्यस्य मनुष्यस्य वाण्यां एतावती शक्तिः कथम् आगता ?' इति सः अनवगच्छन् आश्चर्यम् अनुभूतवान् ।

सत्यलोकस्य प्राप्तेः समनन्तरमेव नारदः ब्रह्माणम् अपृच्छत् - ''पशुपतेः मृत्युः काकतालीयवत् अभवत्, उत सन्दीपस्य वाक्शक्तेः कारणतः ? सामान्ये मानवे एतादृशी शक्तिः कथम् आगता ?'' इति ।

तदा ब्रह्मदेवः - ''नारद ! सन्दीपः सामान्यमनुष्यः न । सः कर्तव्यनिष्ठः, सत्यशीलः, धर्मपरायणः, निस्स्वार्थी च । अतः एव तस्य वाण्यां तावती शक्तिः । इतोऽपि स्पष्टरूपेण ज्ञातव्यम् अस्ति चेत् तत्र पश्यतु'' इति वदन् भूलोकस्य कञ्चित् भागं दर्शितवान् ।

अरण्यमार्गेण सुबोधनामकः कश्चित् संन्यासी गच्छन् आसीत् । मार्गपार्श्वस्थात् गुल्मात् कालदष्टनामकस्य कस्यचित् क्षतग्रस्तस्य नागस्य क्रन्दनं श्रुतवान् सः । कालदष्टः संन्यासिनं दृष्ट्वा महता कष्टेन बहिः आगत्य अपृच्छत् - ''स्वामिन् ! माम् अभिज्ञातवान् वा भवान् ?'' इति ।

सुबोधः नागं दृष्ट्वा तम् अभिजानन् आश्चर्यपूर्वकम् अवदत् - ''भवान् कालदष्टः खलु ?

किम् अभवत् भवतः ? कथं भवान् क्षतग्रस्तः जातः ?'' इति ।

तदा कालदष्टः - ''किं वदामि श्रीमन् ! अत्र ये मानवाः आगच्छन्ति स्म तान् फूत्कारेण भाययन् आसम् । तान् न दशामि स्म । एवमेव कतिचन दिनानि अतीतानि । इदानीं मानवाः निर्णीतवन्तः सन्ति यत् कालदष्टस्य दन्ताः न सन्ति, विषम् अपि नास्ति इति । विना कारणं ते मम उपरि आक्रमणं कृतवन्तः । तेन अहं क्षतग्रस्तः अभवम् । भवतः कथनानुसारं मया आचरितम् । इदानीं मया किं करणीयम् ?'' इति पृष्टवान् ।

सर्वं श्रुत्वा सुबोधः दीर्घं निश्श्वसन् अवदत् - ''कालदष्ट ! भवतः विषये यत् प्रवृत्तं, यच्च भवता अनुभूतं, तादृशाः अनुभवाः बहुभिः सम्मुखीकृताः सन्ति । बहुषु मनुष्येषु हिंसाप्रवृत्तिः अधिकतया दृश्यते । धर्मबद्धाः भूत्वा ये जीवनं यापयन्तः सन्ति तेषां जीवनम् अग्निसमानं भवति । मूर्खाः एतत् कठोरसत्यं वचनैः न अवगच्छन्ति । तादृशाः कार्यद्वारा एव ज्ञापनीयाः यत् अग्निस्पर्शेन दाहः भवति इति । मम कथनस्य तात्पर्यं भवान् अवगतवान् इति भावयामि'' इति । सुबोधः कालदष्टस्य शरीरं सान्त्वनपूर्वकं स्पृशन् ततः निर्गतवान् ।

ततः पञ्चदशनिमेषानन्तरं द्वौ तत्र आगतौ । एकस्य हस्ते दण्डः, अपरस्य हस्ते सर्पस्थापन-कण्डोलः च आसीत् ।

यस्य हस्ते दण्डः आसीत् सः गुल्मेषु अवलोकमानः - ''एषः एव सः सर्पः, यस्य विषमयाः दन्ताः न सन्ति । अहम् गुल्मात् बहिः एतस्य पलायनं कारयामि । भवान् झटिति तं गृहीत्वा कण्डोले स्थापयतु'' इति वदन् दण्डेन गुल्मं प्रहृतवान् । अनुक्षणं कालदष्टः गुल्मात् बहिः आगत्य तं दण्डधारिणं दष्ट्वा अपरस्य समीपम् अगच्छत् । तदा उभौ अपि आक्रोशनं कुर्वन्तौ ततः पलायनम् आरब्धवन्तौ ।

तदा नारदमुनिना ज्ञातं यत् 'धर्मसूक्ष्मता नाम का ?' इति । 'धर्मानुसारं यः व्यवहरति तादृशस्य जीवनम् अग्निसमानं भवति' इत्येतत् वस्तुतत्त्वं प्रत्यक्षोदाहरणद्वारा ज्ञापितवते ब्रह्मणे सः स्वस्य कृतज्ञतां समर्प्य नारायणस्मरणं कुर्वन् ततः निर्गतवान् ।






# चित्रशीर्षिकास्पर्धा



**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, वेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'जुलै'मासीयस्पर्धाशीर्षिकाप्रेषिका -
कु० मङ्गला हेगडे
'मुत्तिनमने', तट्टिकै
शिरसि - ५८१ ४५० (उ.क.)
कर्णाटकम्

**पुरस्कृतशीर्षिका**



आसनम् एतत् ।
एतत् तु वाद्यम् ।


**चन्दमामायाः वार्षिकं ग्राहकशुल्कं -**

**भारते रू. १२० - ००**

Payment in favor of CHANDAMAMA INDIA LIMITED. For details address your enquires to: New 82 (old 92), Defence officers colony, Ekkatuthangal, Chennai - 600 097

HOMEWORK

GEOMETRY - CHAP-6
ENGLISH LESSON-2 -ALL Qs.
HISTORY LESSON 1 TO 7 - TEST

5TH SEP

# HAPPY TEACHER'S DAY



## GREET YOUR TEACHERS
WITH A FLOWER, A CARD, A SMILE
AND A PROMISE TO WORK HARD!
AND EARN THEIR BLESSINGS!



CHANDAMAMA

SALUTES THE TEACHERS OF THE
CITIZENS OF TOMORROW.

